अन्यत्रापि -

१७. कर्त्ता न तावदिह कोऽपि यथेच्छया वा
दृष्टोऽन्यथा कटकृतावपि तत्प्रसङ्गः ।
कार्यं किमत्रभवतापि च तक्षकाद्यै-
राहत्य च त्रिभुवनं पुरूषः करोति ।। इति ।।

तस्मात्प्रागुक्तकारणत्रितयबलादावरणप्रक्षये सार्वज्ञ्यं युक्तम् । न चास्योपदेष्ट्रन्तराभावात् सम्यग्दर्शनादित्रितयानुपपत्तिरिति भणनीयम् । पूर्व सर्वज्ञप्रणीतागमप्रभवत्वादमुष्य अशेषार्थज्ञानस्य । न चान्योन्याश्रयादिदोषः। आगमसर्वज्ञपरम्पराया बीजांकुरवदनादित्वाङ्गीकारादित्यलम् ।

रत्नत्रयपदवेदनीयतया प्रसिद्धं सम्यग्दर्शनादित्रितयमर्हत्प्रवचनसंग्र - हपरे परमागमसारे प्ररूपितम् - 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' इति (त०सू०१।१) ।

विवृतं च योगदेवेन -येन रूपेण जीवाद्यर्थो व्यवस्थितस्तेन रूपेण अर्हता प्रतिपादिते तत्वार्थे विपरीताभिनिवेशरहितत्वाद्यपरपर्यायं श्रद्धानं सम्यकदर्शनम् ।' तथा च तत्वार्थसूत्रं - तत्वार्थं (र्थे) श्रद्धानं सम्यग्दर्शनमिति ।

अन्यदपि -

१८. रुचिर्जिनोक्ततत्त्वेषु सम्यक्श्रद्धानमुच्यते ।
जायते तन्निसर्गेण गुरोरधिगमेन वा ।। इति ।।

परोपदेशनिरपेक्षमात्मस्वरूपं निसर्गः । व्याख्यानादिरूपपरोपदेशजनितं ज्ञानमधिगमः।

येन स्वभावेन जीवादयः पदार्था व्यवस्थितास्तेन स्वभावेन मोहसंशयरहितत्वेनावगमः सम्यग्ज्ञानम् यथोक्तम् --

१९. यथावस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा ।
योऽवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः ।। इति ।।

तज्ज्ञानं पञ्चविधं मतिश्रुतावधिमनःपर्यायकेवलभेदेन । तदुक्तम् -

मति- श्रुतावधि- मन:पर्याय - केवलानि ज्ञानमिति । अस्यार्थ: - ज्ञानावरणक्षयोपशमे सति इन्द्रियमनसी पुरस्कृत्य व्यापृत: सन्यथार्थं मनुते सा मति:। ज्ञानावरणक्षयोपशमे सति मतिजानितं स्पष्टं ज्ञानं श्रुतम् । सम्यग्दर्शनादि-गुणजनितक्षयोपशमनिमित्तमवच्छिन्नविषयं ज्ञानमवधि:। ईर्ष्यान्तराय ज्ञानावरणक्षयोपशमे सति परमनोगतस्यार्थस्य स्फुटं परिच्छेदं ज्ञानं मन:पर्याय:। तप:क्रियाविशेषान्यदर्थं सेवन्ते तपस्विन: तज्ज्ञानमन्यज्ञानासंसृष्टं केवलम्। तत्राद्यं परोक्षं, प्रत्यक्षमन्यत् । तदुक्तम्-

२०. विज्ञानं त्वपराभासि प्रमाणं बाधवर्जितम् -
प्रत्यक्षं च परोक्षं च द्विधा ज्ञेयं विनिश्चयात् ।। इति ।।

अन्तर्गणिकभेदस्तु सविस्तर: तत्रैवागमेऽवगन्तव्य:।

संसरणकर्मोच्छित्तावुद्यतस्य श्रद्दधानस्य ज्ञानवत: पापगमनकारण-क्रियानिवृत्ति: सम्यक्चारित्रम् । तदेतत्सप्रपञ्चमुक्तमर्हता -

२१. सर्वथावद्ययोगानां त्यागश्चारित्रमुच्यते ।
कीर्तितं तदहिंसादिव्रतभेदेन पञ्चधा ।।
अहिंसासूनृतास्तेयब्रह्मचर्यापरिग्रहा: ।।

२२. न यत्प्रमादयोगेन जीवितव्यपरोपणम् ।
चराणां स्थावराणां च तदहिंसाव्रतं मतम् ।।

२३. प्रियं पथ्यं वचस्तथ्यं सूनृतं व्रतमुच्यते ।
तत्तथ्यमपि नो तथ्यमप्रियं चाहितं च यत् ।।

२४. अनादानमदत्तस्यास्तेयव्रतमुदीरितम् ।
ब्राह्या: प्राणा: नृणामर्थो हरता तं हता हि ते ।।

२५. दिव्यौदरिककामानां कृतानुमतकारितै: ।
मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम् ।।

२६. सर्वभावेषु मूर्च्छायास्त्याग: स्यादपरिग्रह: ।
यदसत्स्वपि जायेत मूर्च्छया चित्तविप्लव: ।।

२७. भावनाभिर्भावितानि पञ्चभिः पञ्चधा कमात् ।
महाव्रतानि लोकस्य साधयन्त्यव्ययं पदम् ।। इति ।।
भावनापञ्चकप्रपञ्चनं च निरूपितम् -

२८. हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् ।
आलोच्य भाषणेनापि भावयेत्सूनृतं व्रतम् ।।

इत्यादिना । एतानि सम्यग्दर्शनज्ञानचारित्राणि मिलितानि मोक्षकारणं न प्रत्येकम् । यथा रसायनम् , तथा चात्र ज्ञानश्रद्धानाचरणानि सम्भूय फलं साधयन्ति, न प्रत्येकम् ।

अत्र संक्षेपतस्तावज्जीवाजीवाख्ये द्वे तत्त्वे स्तः । तत्र बोधात्मको जीवः । अबोधात्मस्त्वजीवः । तदुक्तं पद्मनन्दिना ।

२९. चिदचिद् द्वे परे तत्त्वे विवेकस्तद्विवेचनम् ।
उपादेयमुपादेयं हेयं हेयं च कुर्वतः ।।

३०. हेयं हि कर्तृरागादि तत्कार्यमविवेकिता ।
उपादेयं परं ज्योतिरुपयोगैकलक्षणम् ।। इति ।।

सहजचिद्रूपपरिणींत स्वीकुर्वाणे ज्ञानदर्शने उपयोगः । स परस्परप्रदेशानां प्रदेशबन्धात्कर्मणैकीभूतस्यात्मनोऽन्योन्यत्वप्रतिपत्तिकारणं भवति । सकलजीवसाधारणं चैतन्यम् उपशमक्षयक्षयोपशमवशात् औपशमिकक्षयात्मक-क्षायौपशमिकभावेन कर्मोदयवशात्कलुषान्याकारेण च परिणतजीवपर्यायविवक्षायां जीवस्वरूपं भवति । यदवोचद्वाचकाचार्यः-'औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च' (त०द० २।१) इति ।

अनुदयप्राप्तिरूपे कर्मण उपशमे सति जीवस्योत्पद्यमानोभाव औपशमिकः । यथा पङ्के कलुषतां कुर्वति कतकातिद्रव्यसम्बन्धादधःपतिते जलस्य स्वच्छता । (आर्हततत्त्वानुसन्धानवशाद् रागादिपङ्कक्षालनेन निर्मलतापादकः क्षायिको भावः ।) कर्मणः क्षये सति जायमानो भावः क्षायिकः। यथा पङ्कात्पृथग्भूतस्य निर्मलस्य स्फाटिकादिभाजनान्तर्गतस्य जलस्य स्वच्छता । यथा मोक्षः ।

उभयात्मा भावो मिश्रः । यथा जलस्यार्धस्वच्छता । कर्मोदये सति

भवन्भाव औदयिकः। कर्मोपशमाद्यनपेक्षः सहजो भावश्चेतनत्वादिः पारिणामिकः। तदेतद्यथासम्भवं भव्यस्याभव्यस्य वा जीवस्य स्वरूपमिति सूत्रार्थः ॥

तदुक्तं स्वरूपसम्बोधने--

३१. ज्ञानाद् भिन्नो न नाभिन्नो भिन्नाभिन्नः कथंचन ।
ज्ञानं पूर्वापरीभूतं सोऽयमात्मेति कीर्तितः ॥ इति ॥

ननु भेदाभेदयोः परस्परपरिहारेण अवस्थानादन्यतरस्यैव वास्तवत्वादुभयात्मकत्वमयुक्तमिति चेत् - तदयुक्तम्। बाधे प्रमाणाभावात्। अनुपलम्भो हि बाधकं प्रमाणम्। न सोऽस्ति। समस्तेषु वस्तुष्वनेकान्तात्मकत्वस्य स्याद्वादिनो मते सुप्रसिद्धत्वादित्यलम्।

अपरे पुनर्जीवाजीवयोरपरं प्रपञ्चमाचक्षते जीवाकाशधर्माधर्मपुद्गलास्तिकायभेदात्। एतेषु पञ्चसु तत्त्वेषु कालत्रयसम्बन्धितया अस्तीति स्थितिव्यपदेशः। अनेकप्रदेशत्वेन शरीरवत्कायव्यपदेशः।

तत्र जीवा द्विविधाः, संसारिणो मुक्ताश्च। भवाद्भवान्तरप्राप्तिमन्तः संसारिणः। ते च द्विविधाः--समनस्का, अमनस्काश्च। तत्र संज्ञिनः समनस्काः। शिक्षाक्रियाऽऽलापग्रहणरूपा संज्ञा। तद्विधुरास्त्वमनस्काः। ते चामनस्का द्विविधाः, त्रसस्थावरभेदात्। तत्र द्वीन्द्रियादयः शङ्खगण्डोलकप्रभृतयः चतुर्विधास्त्रसाः। पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः।

तत्र मार्गगतधूलिः पृथिवी। इष्टकादिः पृथिवीकायः। पृथिवी कायत्वेन येन गृहीता सः पृथिवीकायिकः। पृथिवीं कायत्वेन यो ग्रहीष्यति स पुथिवीजीवः। एवमबादिष्वपि भेदचतुष्टयं योज्यम्। तत्र पृथिव्यादि कायत्वेन गृहीतवन्तो ग्रहीष्यन्तश्च स्थावरा गृह्यन्ते न पृथिव्यादिपृथिवीकायादयः। तेषामजीवत्वात्। ते च स्थावराः स्पर्शनैकेन्द्रियाः। भवान्तरपाप्तिविधुरा मुक्ताः।

धर्माधर्माकाशास्तिकायाः ते एकत्वशालिनो निष्क्रियाश्च द्रव्यस्य देशान्तरप्राप्तिहेतवः। तत्र धर्माधमौ प्रसिद्धौ। आलोकेनावच्छिन्ने नभसि लोकाकाशपदवेदनीये तयोः सर्वत्रावस्थितिः। गतिस्थित्युपग्रहो धर्माधर्मयोरुपकारः। अतएव धर्मास्तिकायः प्रवृत्त्यनुमेयः। अधर्मास्तिकायः स्थित्यनुमेयः। अन्यवस्तुप्रदेशमध्येऽन्यस्य वस्तुनः प्रवेशोऽवगाहः। तदाकाशकृत्यम्।

स्पर्शरसगन्धवर्णवन्तः पुद्गलाः (त० सू० ५।२४)। ते च द्विविधाः- अणवः स्कन्धाश्च । भोक्तुमशक्या अणवः । द्वयणुकादयः स्कन्धाः । तत्र द्वयणुकादिस्कन्धभेदात् अण्वादिरुत्पद्यते। अण्वादिसङ्घाताद् द्वयणुकादिरुत्पद्यते । क्वचिद् भेदसङ्घाताभ्यां स्कन्धोत्पत्तिः (त०सू० ५।२६)। अत-एव पूरयन्ति गलन्तीति पुद्गलाः।

कालस्यानेकप्रदेशत्वाभावेन अस्तिकायत्वाभावेऽपि द्रव्यत्वमस्ति। तल्लक्षणयोगात् । तदुक्तं-गुणपर्यायवद् द्रव्यम् (त०सू० ५।३८) इति । द्रव्याश्रया निर्गुणा गुणाः (त० सू० ५।३९) यथा जीवस्य ज्ञानत्वादि-धर्मरूपाः, पुद्गलस्य रूपत्वादिसामान्यस्वभावाः। धर्माधर्माकाशकालानां यथासम्भवं गतिस्थित्यवगाहवर्तनाहेतुत्वादिसामान्यानि गुणाः ।

तस्य द्रव्यस्योक्तरूपेण भवनं पर्यायः । उत्पादस्तद्भावः परिणामः पर्याय इति पर्यायाः । यथा जीवस्य घटादिज्ञानसुखक्लेशादयः । पुद्गलस्य मृत्पिण्डघटादयः । धर्मादीनां गत्यादिविशेषाः । अतएव षड् द्रव्याणीति प्रसिद्धिः ।

केचन सप्त तत्वानीति वर्णयन्ति। तदाह-जीवाजीवास्त्रवबन्धसम्वर-निर्जरमोक्षास्तत्वानि (त०सू० १।४) इति। तत्र जीवाजीवौ निरूपितौ ।आस्त्रवो निरूप्यते - औदारिकादिकायादिचलनद्वारेण आत्मनश्चलनं योगपदवेदनीयमास्त्रवः । यथा सलिलावगाहि द्वारं जलाद्यास्त्रवणकारणत्वा दास्त्रव इति निगद्यते, तथा योगप्रणाडिकया कर्मास्त्रिवतीति स योग आस्त्रवः ।

यथार्द्रं वस्त्रं समन्ताद्वातानीतं रेणुजातमुपादत्ते, तथा कषायजलार्द्र आत्मा योगानीतं कर्म सर्वप्रदेशैर्गृह्णाति । यथा वा निष्टप्तायः पिण्डो जले क्षिप्तोऽम्भः समन्ताद् गृह्णाति, तथा कषायोष्णो जीवो योगानीतं कर्म समन्तादादत्ते । कषति = हिनस्ति आत्मानं कुगतिप्रापणादिति कषायः, क्रोधो मानो माया लोभश्च ।

सः द्विविधः शुभाशुभभेदात् । अत्राहिंसादिः शुभः काययोगः । सत्यंमितहितभाषणादिः शुभो वाग्योगः । अर्हत्सिद्धाचार्योपाध्याय-साधुनामधेय-पञ्चपरमेष्ठिभक्तितपोरुचिश्रुतविनयादिः शुभो मनोयोगः। एतद्विपरीतस्त्वशुभः

त्रिविधो योगः ।

तदेतदास्रवभेदप्रभेदजातं,'कायवाङ्मनःकर्मयोगः। स आस्रवः। शुभः पुण्यस्य । अशुभःपापस्य' (त० सू० ६।१-४) इत्यादिना सूत्रसन्दर्भेण ससंरम्भमभाणि । अपरे त्वेवं मेनिरे - आस्रवयति पुरुषं विषयेष्विन्द्रियप्रवृत्तिरास्रवः । इन्द्रियद्वारा हि पौरुषं ज्योतिः विषयान्स्पृशद् रूपादिज्ञानरूपेण परिणमत इति ।

मिथ्यादर्शनाविरतिप्रमादकषायवशाद्योगवशाच्चात्मा सूक्ष्मैकक्षेत्रा-वगाहिनामनन्तप्रदेशानां पुद्गलानां कर्मबन्ध-योग्यानामादानमुपश्लेषणं यत्करोति स बन्धः । तदुक्तं-सकषायत्वाज्जीवः कर्मभावयोग्यान्पुद्गलानादत्ते स बन्धः (त० सू० ८।२) इति ।

तत्र कषायग्रहणं सर्वबन्धहेतूपलक्षणार्थम् । बन्धहेतून्पपाठ वाचकाचार्यः मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः (त० स० ८।१) इति।

मिथ्यादर्शनं द्विविधं-मिथ्याकर्मोदयात्परोपदेशानपेक्षं तत्त्वाश्रद्धानं नैसर्गिकमेकम् । अपरं परोपदेशजम् । पृथिव्यादिषट्कोपादानं षडिन्द्रियासंयमनं चाविरतिः । पञ्चसमितित्रिगुप्तिष्वनुत्साहः प्रमादः । कषायः क्रोधादिः । तत्र कषायान्ताः स्थित्यनुभवबन्धहेतवः प्रकृतिप्रदेशबन्धहेतुर्योग इति विभागः। बन्धश्चतुर्विध इत्युक्तं, प्रकृतिस्थित्यनुभवप्रदेशास्तद्विधयः (त.सू. ८/३) इति। यथा निम्बगुडादेस्तिक्तत्वमधुरत्वादिस्वभाव एवमावरणीयस्य ज्ञानदर्शनावरणत्वम् आदित्यप्रभाच्छादकाम्भोधर-वत्प्रदीपप्रभातिरोधायक-कुम्भवच्च । सदसद्वेदनीयस्य सुखदुःखोत्पादक-त्वमसिधारामधुलेहनवत्।

दर्शने मोहनीयस्य तत्त्वार्थाश्रद्धानकारित्वं दुर्जनसङ्गवत् । चारित्रे मोहनीयस्यासंयमहेतुत्वं मद्यमदवत् । आयुषो देहबन्धनकर्तृकं जलवत् । नाम्नो विचित्रनामकारित्वं चित्रिकवत् । गोत्रस्योच्चनीचकारित्वं कुम्भकारवत्। दानादीनां विघ्ननिदानत्वमन्तरायस्य स्वभावः कोषाध्यक्षवत् ।

सोऽयं प्रकृतिबन्धोऽष्टविधो द्रव्यकर्मावान्तरभेदमूलप्रकृतिवेदनीयः। तथावोचदुमास्वातिवाचकाचार्यः-आद्योज्ञानदर्शनावरणवेदनीयमोहनीया-युर्नामगोत्रान्तरायाः (त० सू० ८।४ ) इति ।

तद्भेदं च समगुह्लात्पञ्च-नव-द्वयष्टाविंशति-चतुर्द्विचत्वारिंशद्-द्वि-पञ्च-भेदा यथाक्रमम् (त० सू० ८।५ ) इति । एतच्च सर्वं विद्यानन्दादिभिर्विवृतमिति विस्तरभयान्न प्रस्तूयते ।

यथाऽजागोमहिष्यादिक्षीराणामेतावन्तमनेहसं माधुर्यस्वभावादप्रच्युति-स्तथा ज्ञानावरणादीनां मूलप्रकृतीनामादितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटिकोट्यः परा स्थितिः (त० सू० ८।१४ ) इत्याद्युक्तकाला दुर्दान्तवत्स्वीयस्वभावादप्रच्युतिः स्थितिः।

यथाऽजागोमहिष्यादिक्षीराणां तीव्रमन्दादिभावेन स्वकार्यकरणे सामर्थ्यविशेषोऽनुभावः तथा कर्मपुद्गलानां स्वकार्यकरणे सामर्थ्यविशेषोऽनुभावः । कर्मभावपरिणत-पुदगलस्कन्धानामनन्तानन्त-प्रदेशानामात्मप्रदेशानुप्रवेशः प्रदेशबन्धः ।

आस्त्रवनिरोधः संवरः । येनात्मनि प्रविशत्कर्म प्रतिषिध्यते स गुप्तिसमित्यादिः संवरः । संचारकारणयोगादात्मनो गोपनं गुप्तिः । सा त्रिविधा-कायवाङ्म्मनोनिग्रहभेदात् । प्राणिपीडापरिहारेण सम्यगयनं समितिः। सेर्याभाषादिभिः पञ्चधा । प्रपञ्चितं च हेमचन्द्राचार्यैः-

३२. लोकातिवाहिते मार्गे चुम्बिते भास्वदंशुभिः ।
जन्तुरक्षार्थमालोक्य गतिरीर्या मता सताम् ।।

३३. अनवद्यमृतं सर्वजनीनं मितभाषणम् ।[१]
प्रिया वाचंयमानां सा भाषासमितिरुच्यते ।।

३४. द्विचत्वारिंशता भिक्षादोषैर्नित्यमदूषितम् ।
मुनिर्यदन्नमादत्ते सैषणासमितिर्मता ।।

३५. आसनादीनि संवीक्ष्य प्रतिलङ्घ्य च यत्नता ।
गृहणीयान्निक्षिपेद् ध्यायेत्सादानसमितिः स्मृतः ।।

३६. कफमूत्रमलप्रायैर्निर्जन्तुजगतीतले ।
यत्नाद्यदुत्सृजेत्साधुः सोत्सर्गसमितिर्भवेत् ।।



अतएव-

आस्रवः स्रोतसो द्वारं संवृणोतीति संवरः ।

इति निराहुः ।

तदुक्तमभियुक्तैः आस्रवो भवहेतुः स्यात्संवरो मोक्षकारणम्।
इतीयमार्हती सृष्टिरन्यदस्याः प्रपञ्चनम् ॥

अर्जितस्य कर्मणस्तपःप्रभृतिभिर्निर्जरणं निर्जराख्यं तत्त्वम् । चिरकालप्रवृत्तकषायकलापं पुण्यं सुखदुःखे च देहेन जरयति नाशयति । केशोल्लुञ्चनादिकं तप उच्यते । सा निर्जरा द्विविधा यथाकालौपक्रमिकभेदात्। तत्र प्रथमा यस्मिन्काले यत्कर्म फलप्रदत्वेनाभिमतं तस्मिन्नेव काले फलदानाद् भवन्ती निर्जरा कामादिपाकजेति च जेगीयते । यत्कर्म तपोबलात्स्वकामनयोदयावलिं प्रवेश्य प्रपद्यते सौपक्रमिकनिर्जरा । यदाह-

३८. संसारबीजभूतानां कर्मणां जरणादिह ।
निर्जरा सम्मता द्वेधा सकामाकामनिर्जरा ॥

३९. स्मृता सकामा यमिनामकामा त्वन्यदेहिनाम् ॥ इति ॥
मिथ्यादर्शनादीनां बन्धहेतुनां निरोधेऽभिनवकर्माभावान्निर्जराहेतुसन्नि-धानेनार्जितस्य कर्मणो निरसनादात्यन्तिककर्ममोक्षणं मोक्षः। तदाह-बन्ध-हेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्षः (त० सू० १०।२) इति। तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् (त० सु० १०।५ ) ।

यथा हस्तदण्डादिभ्रमिप्रेरितं कुलालचक्रमुपरतेऽपि तस्मिंस्तद्बलादेवासंस्कारक्षये भ्रमति, तथा भवस्थेनात्मनापवर्गप्राप्तये बहुशो यत्कृतं प्रणिधानं मुक्तस्य तदभावेऽपि पूर्वसंस्कारादालोकान्तं गमनमुपपद्यते । यथा वा मृत्तिकालेपकृतगौरवमलाबुद्रव्यं जलेऽधः पतति, पुनरपेतमृत्तिकाबन्धमूर्ध्वं गच्छति, तथा कर्मरहित आत्मा असङ्गत्वादूर्ध्वं गच्छति । बन्धच्छेदादेरण्डबीजवच्चोर्ध्वं गतिस्वभावाच्चाग्निशिक्षावत् ।

अन्योन्यं प्रदेशानुप्रवेशे सत्यविभागेनावस्थानं बन्धः । परस्परप्राप्तिमात्रं सङ्गः । तदुक्तं, पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथा गतिपरिणामाच्च (त० सू० १०।६) आविद्धकुलालचक्रवद्व्यपगत-लेपालाबुवदेरण्डबीजव-दग्निशिखावच्च (त० सू० १०।७) इति । अत एव पठन्ति-

४०    गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते त्वलोकाकाशमागताः ।। (प.न.) इति ।।

अन्ये तु गतसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरिदेशावस्थाने मुक्तिरित्यास्थिषत । एवमुक्तानि सुखदुःखसाधनाभ्यां पुण्यपापाभ्यां सहितानि नव पदार्थान्केचनाङ्गीचक्रुः । तदुक्तं सिद्धान्ते जीवाजीवौ पुण्यपापयुतावास्रवः संवरो निर्जरणं बन्धो मोक्षश्च नव तत्त्वानीति । संग्रहे प्रवृत्ता वयमुपरताः स्मः ।

अत्र सर्वत्र सप्तभङ्गिनयाख्यं न्यायमवतारयन्ति जैनाः । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्यः इति ।

तत्सर्वमनन्तवीर्यः प्रत्यपीपदत्-

४१.    तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् ।
स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ।।

४२.    क्रमेणोभयवाञ्छायां प्रयोगः समुदायभाक् ।
युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ।।

४३.    आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।
अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ।।

४४.    समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते । इति ।

स्याच्छन्दः । खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योतकः। यथोक्तम्--

४५.    वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम् ।
स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः ।। इति ।।

यदि पुनरेकान्तद्योतकः स्याच्छब्दोऽयं स्यात्तदा स्यादस्तीति वाक्ये स्यात्पदमनर्थकं स्यात् । अनेकान्तद्योतकत्वे वु स्यादस्ति कथंचिदस्तीति स्यात्पदात्कथंचिदित्ययमर्थो लभ्यत इति नानर्थक्यम् । ततः

४६.    स्याद्वादः सर्वथैकान्तत्यागात्किंवृत्तचिद्विधेः ।
सप्तभङ्गिनयापेक्षो हेयादेयविशेषकृत् ।। इति ।।

यदि वस्त्वस्त्येकान्ततः सर्वथा सर्वदा सर्वत्र सर्वात्मनाऽस्तीति नोपादित्साजिहासाभ्यां क्वचित्कदाचित्केनचित्प्रवर्तेत निवर्तेत वा । प्राप्ता-प्रापणीयत्वादहेयहानानुपपत्तेश्च । अनेकान्तपक्षे तु कथञ्चित्क्वचित्केनचित्सत्त्वेन हानोपादाने प्रेक्षावतामुपपद्येते ।

किं च वस्तुनः सत्त्वं स्वभावः, असत्त्वं वा इत्यादि प्रष्टव्यम् । न तावदस्तित्वं वस्तुनः स्वभाव इति समस्ति । घटोऽस्तीत्यनयोः पर्यायतया युगपत्प्रयोगायोगात् । नास्तीति प्रयोगविरोधाच्च । एवमन्यत्रापि योज्यम्। यथोक्तम् -

४७.    घटोऽस्तीति न वक्तव्यं सन्नेव हि यतो घटः ।
नास्तीत्यपि न वक्तव्यं विरोधात् सदसत्त्वयोः ।। इत्यादि ।।

तस्मादित्थं वक्तव्यम् -सदसत्सदसदनिर्वचनीयवादभेदेन प्रतिवादिनश्चतुर्विधाः । पुनरप्यनिर्वचनीयमतेन मिश्रितानि सदसदादिमतानीद्वि त्रिविधाः । तान्प्रति किं वस्त्वस्तीत्यादि पर्यनुयोगे 'कथञ्चित्तदस्ति' इत्यादि प्रतिवचनसम्भवेन ते वादिनः सर्वे निर्विण्णाः सन्तस्तूष्णीमासत इति सम्पूर्णार्थविनिश्चायिनः स्याद्वादमङ्गीकुर्वतस्तत्र तत्र विजय इति सर्वमुपपन्नम् । यदवोचदाचार्यः । स्याद्वादमञ्जर्याम्-

४८.    अनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम् ।
एकदेशविशिष्टोऽर्थो नयस्य विषयो मतः ।।

४९.    न्यायानामेकनिष्ठानां प्रवृत्तौ श्रुतवर्त्मनि ।
सम्पूर्णार्थविनिश्चायि स्याद्वस्तु श्रुतमुच्यते ।। इति ।

५०.    अन्योन्यपक्षप्रतिपक्षभावाद् यथा परे मत्सरिणः प्रवादाः ।
नयानशेषानविशेषमिच्छन् न पक्षपाती समयस्तथार्हतः ।।
(हेमचन्द्रकृत द्वितीयद्वात्रिंशिका वी० स्तु० श्लो० ३०)

जिनदत्तसूरिणा जैनं मतमित्थमुक्तम्-

५१. बलभोगोपभोगानामुभयोदनिलाभयोः ।
अन्तरायस्तथा निद्रा भीरज्ञानं जुगुप्सितम् ।।

५२. हिंसा रत्यरती रागद्वेषावविरतिः स्मरः ।
शोको मिथ्यात्वमेतेऽष्टादश दोषा न यस्य सः ।।

५३. जिनो देवो गुरुः सम्यक्तत्त्वज्ञानोपदेशकः ।
ज्ञानदर्शनचारित्राण्यपवर्गस्य वर्तनी ।।

५४. स्याद्वादस्य प्रमाणे द्वे प्रत्यक्षमनुमापि च ।
नित्यानित्यात्मकं सर्वं नव तत्त्वानि सप्त वा ।।

५५. जीवाजीवौ पुण्यपापे चास्रवः संवरोऽपि च ।
बन्धो निर्जरणं मुक्तिरेषां व्याख्याऽधुनोच्यते ।।

५६. चेतनालक्षणो जीवः स्यादजीवस्तदन्यकः ।
सत्कर्मपुद्गलाः पुण्यं पापं तस्य विपर्ययः ।।

५७. आस्रवः स्रोतसो द्वारं संवृणोतीति संवरः ।
प्रवेशः कर्मणां बन्धो निर्जरस्तद्वियोजनम् ।।

५८. अष्टकर्मक्षयान्मोक्षोऽथान्तर्भावश्च कैश्चन ।
पुण्यस्य संवरे पापस्यास्रवे क्रियते पुनः ।।

५९. लब्धानन्तचतुष्कस्य लोकागूढस्य चात्मनः ।
क्षीणाष्टकर्मणो मुक्तिर्निर्व्यावृत्तिर्जिनोदिता ।।

६०. सरोजहरणा भैक्षभुजो लुञ्चितमूर्धजाः ।
श्वेताम्बराः क्षमाशीला निःसङ्गा जैनसाधवः ।।

६१. लुञ्चिताः पिच्छकाहस्ताः पाणिपात्रा दिगम्बराः।
ऊर्ध्वाशिनो गृहे दातुर्द्वितीयाः स्युर्जिनर्षयः ।।

६२. भुङ्क्ते न केवलौ न स्त्री मोक्षमेति दिगम्बरः।
प्राहुरेषामयं भेदो महाञ्श्वेताम्बरैः सह ।। इति ।।



**इति श्रीमत्सायणमाधवीये सर्वदर्शनसंग्रहे आर्हतदर्शनम् ।।**

# संस्कृतधम्मपदम्

## १. प्रथमः यमकवर्गः

मनःपूर्वङ्गमा धर्माः,मनःश्रेष्ठा मनोमयाः ।
मनसा चेत् प्रदुष्टेन, भाषते वा करोति वा ।

ततस्तं दुःखमन्वेति, चक्रवद् वहतः पदम् ॥१॥
मनःपूर्वङ्गमा धर्माः, मनः श्रेष्ठा मनोमयाः ।

मनसा चेत् प्रसन्नेन, भाषते वा करोति वा ।
ततस्तं सुखमन्वेति, यथा छायानपायिनी ॥२॥

आक्रुष्टोऽहं हतश्चाहं, जितो भाण्डं हृतं च मे ।
ये चैतदुपनह्यन्ति, वैरं तेषां न शाम्यति ॥३॥

आक्रुष्टोऽहं हतश्चाहं, जितो भाण्डं हृतं च मे ।
ये नैतदुपनह्यन्ति, वैरं तेषूपशाम्यति ॥४॥

न हि वैरेण वैराणि, शाम्यन्तीह कदाचन ।
अवैरेण च शाम्यन्तीत्येष धर्मः सनातनः ॥५॥

परे च न विजानन्ति,गमिष्याम इतो वयम् ।
ये च तत्र विजानन्ति, ततः शाम्यन्ति मेधगाः ॥६॥

पश्यन्तं वै शुभं भिक्षुमिन्द्रियेषु न्वसंवृतम् ।
भोजने च अमात्रज्ञं, कुसीदं हीनवीर्यकम् ।
तं वै प्रसहते मारो, वातो दुर्बलवृक्षवत् ॥७॥

पश्यन्तमशुभं भिक्षुमिन्द्रियेषु सुसंवृतम् ।
भोजने चैव मात्रज्ञं, श्रद्धालुं कृतवीर्यकम् ।
तं न प्रसहते मारो, वातोऽभेदयं गिरिं यथा ॥८॥

अनिष्कषायः काषायं यो वस्त्रं धारयिष्यति ।
अपेतो दमसत्याभ्यां न स काषायमर्हति ॥९॥

यश्च वान्तकषायः स्यात्, शीलेषु सुसमाहितः ।
उपेतो दमसत्याभ्यां, स वै काषायमर्हति ॥१०॥

असारे सारमतयः, सारे चासारदर्शनाः ।
ते सारं नाधिगच्छन्ति, मिथ्यासङ्कल्पगोचराः ॥११॥

सारं च सारतो ज्ञात्वा, असारं च असारतः ।
ते सारमधिगच्छन्ति, सम्यक्सङ्कल्पगोचराः ॥१२॥

दुश्छन्नं हि यथागारं, वृष्टिः समतिविध्यति ।
एवमभावितं चित्तं, रागः समतिविध्यति ॥१३॥

सुच्छन्नं हि यथागारं, वृष्टिर्न विनिविध्यति ।
एवं सुभावितं चित्तं, रागो न विनिविध्यति ॥१४॥

इह शोचति प्रेत्य शोचति, पापकारी ह्युभयत्र शोचति ।
स शोचति स विहन्यते, दृष्ट्वा कर्म क्लेशनमात्मनः ॥१५॥

इह मोदते प्रेत्य मोदते, कृतपुण्य उभयत्र मोदते ।
स मोदते स प्रमोदते, दृष्ट्वा कर्मविशोधनम् ॥१६॥

इह तप्यति प्रेत्य तप्यति, पापकारी ह्युभयत्र तप्यति ।
पापं मया कृतमिति तप्यति, भूयस्तप्यति दुर्गतिं गतः ॥१७॥

इह नन्दति प्रेत्य नन्दति, कृतपुण्य उभयत्र नन्दति ।
पुण्यं मया कृतमिति नन्दति, भूयो नन्दति सुगतिं गतः ॥१८॥

बह्वीमपि संहितां भाषमाणो, न तत्करो ना भवति प्रमत्तः ।
गोपो यथा गा गणयन् परेषां, न भागवान् श्रामण्यस्य भवति ॥१९॥

अल्पामपि संहितां भाषमाणो, धर्मस्य भवत्यनुधर्मचारी ।
रागं च द्वेषं च विहाय मोहं,सम्यग्मतिः स सुविमुक्तचित्तः ।
अनुपाददान इह वा परत्र, स भागवान् श्रामणस्य भवति ॥२०॥

**द्वितीयः अप्रमादवर्गः**

अप्रमादोऽमृतपदं, प्रमादो मुत्युदायकः ।
म्रियन्ते नाप्रमत्ता वै, ये प्रमत्ता यथा मृताः ॥२१॥

एवं विशेषतो ज्ञात्वा, येऽप्रमादे नु पण्डिताः ।
अप्रमादे प्रमोन्दते, आर्याणां गोचरे रताः ॥२२॥

ते ध्यायिनः साततिकाः, नित्यं दृढपराक्रमाः ।
स्पृशन्ति धीरा निर्वाणं, योगक्षेममनुत्तरम् ॥२३॥

उत्थायिनः स्मृतिमतः, शुचिकर्मकृतो निशम्यकारिणः ।
संयतस्य धर्मजीविनोऽप्रमत्तस्य यशोऽभिवर्धते ॥२४॥

उत्थानेनाप्रमादेन, संयमेन दमेन च ।
द्वीपं कुर्वीत मेधावी, यदौघेन(न)विकीर्यते ॥२५॥

प्रमादमनुयुञ्जन्ति, बाला दुर्मेधसो जनाः ।
अप्रमादं च मेधावी, रक्षति श्रेष्ठवित्तवत् ॥२६॥

मा प्रमादमनुयुञ्जीत, मा कामरतिसंस्तवम् ।
अप्रमत्तो नरो ध्यायन्, प्राप्नोति विपुलं सुखम् ॥२७॥

प्रमादमप्रमादेन, यदा नुदति पण्डितः ।
प्रज्ञाप्रासादमारुह्य, अशोकः शोकिनीं प्रजाम् ।
गिरिष्ठ इव भूमिष्ठान्, धीरो बालानवेक्षते ॥२८॥

अप्रमत्तः प्रमत्तेषु, सुप्तेषु बहुजागरः ।
यथाऽबलाश्वं शीघ्राश्वो हित्वा याति सुबुद्धिमान् ॥२९॥

अप्रमादेन मघवा, देवानां श्रेष्ठतां गतः ।
अप्रमादं प्रशसन्ति, प्रमादो गर्हितः सदा ॥३०॥

अप्रमादरतो भिक्षुः, प्रमादे भयदर्शनः ।
संयोजनमणु स्थूलं गच्छत्यग्निर्दहन्निव ॥३१॥

अप्रमादरतो भिक्षुः, प्रमादे भयदर्शनः ।
अभव्यः परिहाणाय, निर्वाणस्यैव सन्तिके ॥३२॥

**३. तृतीयः चित्तवर्गः**

स्पन्दनं चपलं चित्तं दूरक्षं दुर्निवारम् ।
ऋजुकरोति मेधावी, इषुकृत् तेजनं यथा ॥३३॥

मत्स्यो यथा स्थले क्षिप्त उदकस्यौकत उद्धृतः ।
मारधेयप्रहाणाय, चित्तं स्पन्दति सर्वदा ॥३४॥

दुर्निग्रहस्य च लघोर्यत्रकामनिपातिनः ।
चित्तस्य दमनं साधु, दान्तं चित्तं सुखावहम् ॥३५॥

सुदुर्दर्शं सुनिपुणं यत्रकानिपातिनम् ।
चित्तं रक्षेद्धि मेधावी, गुप्तं चित्तं सुखावहम् ॥३६॥

दूरङ्गममेकचरमशरीरं गुहाशयम् ।
संयंस्यन्ति तु ये चित्तं मोक्ष्यन्ते मारबन्धनात् ॥३७॥

अनवस्थितचित्तस्य, सद्धर्ममविजानतः ।
परिप्लवप्रसादस्य, प्रज्ञया नैव पूर्यते ॥३८॥

अनवश्रुतचित्तस्य, अनन्वाहतचेतसः ।
पुण्यपापप्रहीणस्य, नास्ति वै जाग्रतो भयम् ॥३९॥

कुम्भोपमं कायमिमं विदित्वा, नगरोपमं चित्तमिदं गृहीत्वा ।
युध्येत मारं प्रज्ञायुधेन, जितं च रक्षेदनिवेशनः स्यात् ॥४०॥

अयं बताचिरं कायः पृथिवीमधिशेष्यते ।
क्षुब्धश्चापेतविज्ञानो निष्प्रयोजनकाष्ठवत् ॥४१॥

द्विट् द्विषं प्रति यत् कुर्यात्, वैरी वा पन वैरिणम् ।
मिथ्याप्रणिहितं चित्तं, पापीयस्तं ततः क्रियात् ॥४२॥

पितरौ तन्न कुर्याताम्, अन्ये चापि न ज्ञातिकाः ।

सम्यक्प्रणिहितं चित्तं, श्रेयः कुर्यात् ततोऽधिकम् ।।४३।।

**४. चतुर्थः पुष्पवर्गः**

पृथ्वीमिमां कः प्रविचेष्यतीह, यमस्य लोकं नु सदेवकं च ।
सूद्देशितं धर्मपदं नरः को विचक्षणः पुष्पमिव प्रचेष्यति? ।।४४।।

विचेष्यतीमां पृथिवीं हि शैक्ष्यो, यमस्य लोकं नु सदेवकं च ।
सुदेशितं धर्मपदं नु शैक्ष्यो, विचक्षणः पुष्पमिव प्रचेष्यति? ।।४५।।

फेनोपमं कायमिमं विदित्वा मरीचिधर्ममभिसम्बोधमानः ।
छित्वा स मारस्य प्रपुष्पकाणि, अदर्शनं मृत्युराजस्य गच्छेत् ।।४६।।

पुष्पाण्येव प्रचिन्वन्तं, व्यासक्तमनसं नरम् ।
गच्छति मृत्युरादाय, सुप्तं ग्रामं महौघवत् ।।४७।।

पुष्पाण्येव प्रचिन्वन्तं, व्यासक्तमनसं नरम् ।
अतृप्तमिव कामेसु, ह्यन्तकः कुरुते वशम् ।।४८।।

यथापि भ्रमरः पुष्पं, वर्णगन्धमहेठयन् ।
परैति रसमादाय, ग्रामे एवं मुनिश्चरेत् ।।४९।।

न परेषां विलोमानि न, परेषां कृताकृतम् ।
आत्मन एव पश्येद्वै, अकृतानि कृतानि च ।।५०।।

यथापि रुचिरं पुष्पं, वर्णवत् सद् अगन्धकम् ।
एवं सुभाषिता वाचा, निष्फला स्यादकुर्वतः ।।५१।।

यथापि रुचिरं पुष्पं, वर्णवद्वै सगन्धकम् ।
एवं सुभाषिता वाचा, सफला भवति कुर्वतः ।।५२।।

यथापि पुष्पराशिभ्यः, कुर्यान्मालागुणान् बहून् ।
एवं जातेन मर्त्त्येन, कर्तव्यं कुशलं बहु ।।५३।।

न पुष्पगन्धः प्रतिवातमेति, न चन्दनं तगरं मल्लिका वा ।
सतां च गन्धः प्रतिवातमेति, सर्वा दिशः सत्पुरुषः प्रवाति ।।५४।।

चन्दनं तगरं वापि, उत्पलं चाथ वार्षिकी ।
एतेषु गन्धजातेषु शीलगन्धो ह्यनुत्तरः ।।५५।।

गन्धोऽयं तगरादीनां स्वल्पमात्रं हि दृश्यते ।
यश्च शीलवतां गन्धो वाति देवेषु चोत्तमः ।।५६।।

तेषां सम्पन्नशीलानामप्रमादविहारिणाम् ।
सम्यग्ज्ञानविमुक्तानां मारो मार्गं न विन्दति ।।५७।।

यथा सङ्कारधाने वै, उज्झिते नु बृहत्पथे ।
पद्मं तत्र नु जायेत, शुचिगन्धं मनोरमम् ।।५८।।

एवं सङ्कारभूतेषु, ह्यन्धभूते महाजने ।
सम्यक्सम्बुद्धशिष्यो वै, प्रज्ञया रोचते भृशम् ।।५९।।

**पञ्चमः बालवर्गः**

दीर्घा वै जाग्रतो रात्रिर्दीर्घं श्रान्तस्य योजनम् ।
दीर्घो बालस्य संसारः, सद्धर्ममविजानतः ।।६०।।

चरँश्चेन्नाधिगच्छेद्वै, श्रेयांसं तुल्यमात्मनः ।
एकचर्यां दृढां कुर्यान्नास्ति बाले सहायता ।।६१।।

पुत्रो मेऽस्ति, धनं मेऽस्ति, इति बालो विहन्यते ।
आत्मैव ह्यात्मनो नास्ति, कुतः पुत्राः कुतो धनम् ।।६२।।

यो बालो मन्यते बाल्यं, पाण्डितो वापि तेन सः ।
बालश्च पण्डितम्मन्यः, स वै बाल इतीर्यते ।।६३।।

बालंश्चेज्जीवनं यावत् , पर्युपास्ते हि पण्डितम् ।
न स धर्मं विजानाति, दर्वी सूपरसं यथा ।।६४।।

मुहूर्तमपि चेद्विज्ञः पर्युपास्ते हि पण्डितम् ।
क्षिप्रं धर्मं विजानाति, जिह्वा सूपरसं यथा ।।६५।।

चरन्ति बालाः कुधियोऽमित्रेणेवात्मना स्वयम् ।

कुर्वन्तः पापकं कर्म तस्यास्ति कटुकं फलम् ॥६६॥

न तत् कर्म कृतं साधु, यत् कृत्वा ह्यनुतप्यते ।
रुदन्नश्रुमुखो यस्य, विपाकं प्रतिसेवते ॥६७॥

तच्च कर्म कृतं साधू, यत् कृत्वा नानुतप्यते ।
यस्य प्रतीतं सुमना विपाकं प्रतिसेवते ॥६८॥

मध्विव मन्यते बालो, यावत् पापं न पच्यते ।
यदा च पच्यते पापं, दुःखं बालो निगच्छति ॥६९॥

मासे मासे कुशाग्रेण, बालो भुंक्ते हि भोजनम् ।
न स सङ्ख्यातधर्माणां, कलामर्हति षोडशीम् ॥७०॥

नहि पापं कृतं कर्म, सदयो मुञ्चति दुग्धवत् ।
दहत् तद् बालमन्वेति, भस्मावृतवह्निवत् ॥७१॥

यावदेव ह्यनर्थाय, ज्ञप्तं बालस्य जायते ।
हन्ति बालस्य शुक्लांशं, तन्मूर्धानं विपातयन् ॥७२॥

असतीं भावनामिच्छेत्, पुरस्कारं च भिक्षुषु ।
आवासेषु च ऐश्वर्यं, पूजां परकुलेषु च ॥७३॥

'कृतं ममैव मन्येतां गृहिप्रव्रजितावुभौ ।
ममैवातिवशौ स्यातां कृत्याकृत्येषु केषुचित्' ।
इति बालस्य सङ्कल्प इच्छा, मानश्च वर्धते ॥७४॥

'अन्योपनिषद्धि लाभस्य, अन्या निर्वाणगामिनी' ।
एवमेतदभिज्ञाय, भिक्षुर्बुद्धस्य श्रावकः ।
सत्कारं नाभिनन्देद् वै, विवेकमनुबृंहयेत् ॥७५।

## ६. षष्ठः पण्डितवर्गः

निधीनां च प्रवक्तारं सम्पश्येद्वर्ज्यदर्शिनम् ।
निगृह्यवादिसुधियं तादृशं पण्डितं भजेत् ।

तादृशं भजमानस्य श्रेय एव न पापकम् ॥७६॥

उपदिशेदनुशिष्याद्वै, असभ्याच्च निवारयेत् ।
सतां हि स प्रियो भूयादप्रियश्चासतां ननु ।।७७।।

भजेन्न पापमित्राणि, न भजेत् पुरुषाधमान् ।
भजेत् कल्याणमित्राणि, भजेत पुरुषोत्तमान् ।।७८।।

धर्मप्रीतिः सुखं शेते, विप्रसन्नेन चेतसा ।
आर्यप्रवेदिते धर्मे, पण्डितो रमते सदा ।।७९।।

उदकं हि नयन्ति नेतृकाः, इषुकारा नमयन्ति तेजनम् ।
नमयन्ति हि दारु तक्षकाः, आत्मानं दमयन्ति पण्डिताः ।।८०।।

यथा ह्येकघनः शैलो, वातेन न समीर्यते ।
एवं निन्दाप्रशंसासु, समीर्यन्ते न पण्डिताः ।।८१।।

ह्रदो यथा हि गम्भीरो, विप्रसन्नो ह्यनाविलः ।
एवं श्रुत्वा तथा धर्मान्, विप्रसीदन्ति पण्डिताः ।।८२।।

सर्वत्र वै सत्पुरुषास्त्यजन्ति, न कामकामा लपयन्ति सन्तः।
दुःखेन स्पृष्टा अथवा सुखेन, नोच्चावचं पण्डिता दर्शयन्ति ।। ८३।।

न स्वस्य हेतोर्न परस्य हेतोर्न पुत्रमिच्छेन्न धनं न राष्ट्रम् ।
नेच्छेदधर्मेण समृद्धिमात्मनः, स शीलवान् पण्डितो धार्मिकः स्यात् ।। ८४
।।

अल्पकास्ते मनुष्येषु, ये जनाः पारगामिनः ।
अथेयमितरा प्रजा, तीरमेवानुधावति ।। ८५ ।।

ये खलु सम्यगाख्याते, धर्मे धर्मानुदर्शिनः ।
ते जनाः पारमेष्यन्ति, मृत्यधेयं सुदुस्तरम् ।।८६।।

कृष्णं धर्मं विप्रहाय, सुधीः शुक्लं नु भावयेत् ।
ओकादनोकमागत्य, विवेके यत्र दूरमम् ।।८७।।

तत्राभिरतिमिच्छद्वै, हित्वा कामानकिञ्चनः ।

पर्यवदापयेत् स्वं वै, चित्तक्लेशैः स पण्डितः ।।८८।।

सम्बोध्यङ्गेषु येषां च, सम्यक् चित्तं सुभावितम् ।
आदान-प्रतिनिःसर्गे, अनुपादाय ये रताः ।
क्षीणाश्रवा दयुतियुतास्ते लोके परिनिर्वृताः ॥८९॥

**७. सप्तमः अर्हद्वर्गः**

गताध्वनो विशोकस्य, विप्रमुक्तस्य सर्वतः ।
सर्वग्रन्थप्रहीणस्य, परिदाहो न विद्यते ॥९०॥

यतन्ते स्मृतिमाधाय, रमन्ते न गृहेषु ते ।
हंसवत् पल्वलं हित्वा ओकमोकं तरन्ति ते ॥९१॥

येषां सन्निचयो नास्ति, ये परिज्ञातभोजनाः ।
शून्यतो ह्यनिमित्तश्च, विमोक्षो यस्य गोचरः ।
नभसीव शकुन्तानां गतिस्तस्य दुरन्वया ॥९२॥

यस्याश्रवाः परिक्षीणाः, आहारे खल्वनिःसृतः ।
अनिमित्त; शून्यतश्च, विमोक्षो यस्य गोचरः ।
शकुन्तानामिवाकाशे, पदं तस्य दुरन्वयम् ॥९३॥

यस्येन्द्रियाणि शमथं गतानि, अश्वा यथा सारथिना सुदन्ताः ।
प्रहीणमानस्य अनाश्रवस्य, देवा नु तस्मै स्पृहयन्ति तादृशे ॥९४॥

पृथ्वीसमो न विरुध्यते, इन्द्रकीलोपमः सुव्रतस्तादृक् ।
हृदवदपेतकर्दमः, संसारा न भवन्ति तादृशः ॥९५॥

शान्तं कर्म शमा वाचा, शान्तं भवति तन्मनः ।
सम्यग्ज्ञात्वाविमुक्तस्य, ह्युपशान्तस्य तादृशः ॥९६॥

अश्रद्धश्चाकृतज्ञश्च, सन्धिच्छेदश्च यो नरः ।
हतावकाशो वान्ताशः, स वै उत्तमपूरुषः ॥९७॥

ग्रामे वा यदि वारण्ये, निम्ने वा यदि वा स्थले ।
अर्हन्तो यत्र विहरन्ति, सा भूमी रमणीयका ॥९८॥



रमणीयान्यरण्यानि, न यत्र रमते जनः ।

वीतरागा हि रंस्यन्ते, न ते कामगवेषिण: ।।९९।।

## ८. अष्टम: सहस्त्रवर्ग:

सहस्त्रमपि चेद्वाचो, ह्यनर्थपदसंहिता: ।
एकमर्थपदं श्रेय:, श्रुत्वा यदुपशाम्यति ।।१००।।

सहस्त्रमपि चेद् गाथा: अनर्थपदसंहिता: ।
एकं गाथापदं श्रेय:, श्रुत्वा यदुपशाम्यति ।।१०१।।

गाथा: शतं यो भाषेत, ह्यनर्थपदसंहिता: ।
एकं धर्मपदं श्रेय:, श्रुत्वा यदुपशाम्यति ।।१०२।।

य: सहस्त्रं सहस्त्रेण, संग्रामे मानुषान् जयेत् ।
जयेदात्मानमेकं च, स संग्रामजिदुत्तम: ।।१०३।।

आत्मा ह वै जित: श्रेयान्, या चेयमितरा प्रजा ।
पुरुषस्यात्मदान्तस्य, नित्यं संयतचारिण: ।।१०४।।

नैव देवो न गन्धर्वो न मारो ब्राह्मणा सह ।
जितमपजितं कुर्याज्जन्तोस्तु खलु तादृश: ।।१०५।।

मासे मासे सहस्त्रेण, यो यजेत शतं समा: ।
एकं च भावितात्मानं, मुहूर्तमपि पूजयेत् ।
श्रेयसी पूजना सैव, यन्न वर्षशतं हुतम् ।।१०६

यश्च वर्षशतं जन्तुरग्निं परिचरेद् वने ।
एकं च भावितात्मानं, मुहूर्तमपि पूजयेत् ।
पूजना श्रेयसी सैव, न यद् वर्षशतं हुतम् ।।१०७।।

यत् किञ्चिदिष्टं च हुतं च लोके, संवत्सरं यजते पुण्यकांक्ष: ।
तत् सर्वमपि न चतुर्थांशमेति, श्रेयस्करी यार्जुगतेषु वन्दना ।।१०८।।

अभिवादनशीलस्य नित्यं वृद्धोपजीविन: ।
चत्त्वारो धर्मा वर्धन्ते, आयुर्वर्ण: सुखं बलम् ।।१०९।।

यश्च वर्षशतं जीवेद्, दुश्शीलश्चासमाहितः ।
एकाहो जीवितं श्रेयः, शीलिनो ध्यायिनस्तथा।। ११०।।

यश्च वर्षशतं जीवेद्, दृष्प्रज्ञश्चासमाहितः ।
एकाहो जीवितं श्रेयः, प्रज्ञायुक्तस्य ध्यायिनः ।।१११।।

यश्च वर्षशतं जीवेत्, कुसीदो हीनवीर्यवान् ।
एकाहो जीवितं श्रेयो वीर्यमारभतो दृढम् ।।११२।।

यश्च वर्षशतं जीवेद्, अपश्यँश्चोदयव्ययम् ।
एकाहो जीवितं श्रेयः, पश्यतो ह्युदयव्ययम् ।।११३।।

यश्च वर्षशतं जीवेद्, अपश्यन्नमृतं पदम् ।
एकाहो जीवितं श्रेयः, पश्यतो ह्यमृतं पदम् ।।११४।।

यश्च वर्षशतं जीवेद्, अपश्यन् धर्ममुत्तमम् ।
एकाहो जीवितं श्रेयः, पश्यतो धर्ममुत्तमम् ।।११५।।

**९. नवमः पापवर्गः**

त्वरां कुर्याद्धि कल्याणे, पापाच्चित्तं निवारयेत् ।
मन्दं हि कुर्वतः पुण्यं, पापे हि रमते मनः ।।११६।।

पापं चेत् पुरुषः कुर्यान्न तत् कुर्यात् पुनः पुनः ।
न तस्मिन् स्वैरितां कुर्याद् दुःखं पापस्य तूच्छ्रयः ।।११७।।

पुण्यं चेत् पुरुषः कुर्यादेतत् कुर्यात् पुनः पुनः ।
तस्मिंश्च छन्दं कुर्यात् स सुखं पुण्यस्य चोच्छ्रयः ।।११८।।

भद्रं पश्यति पापोऽपि, यावत् पापं न पच्यते ।
यदा च पच्यते पापम् (अथ) पापः पापानि पश्यति ।।११९।।

पापं पश्यति भद्रोऽपि, यावद् भद्रं न पच्यते ।
यदा च पच्यते भद्रम् (अथ) भद्रो भद्राणि पश्यति ।।१२०।।

मावमन्येत पापं वै, न मामेतद्धि एष्यति ।

उदबिन्दुनिपातेन, ह्युदकुम्भोऽपि पूर्यते ॥
बालः पूरयते पापमाचिन्वन् स्तोकमप्यथ ॥१२१॥

मावमन्येत पुण्यं वै, न मामेतद्धि पक्ष्यति ।
उदबिन्दुनिपातेन, ह्युदकुम्भोऽपि पूर्यते ॥
बालः पूरयते पुण्यमाचिन्वन् स्तोकमप्यथ ॥१२२॥

वणिग्वत् सभयं मार्गमल्पसार्थो महद्धनः ।
विषवज्जीवितं वाञ्छन् पापानि परिवर्जयेत् ॥१२३॥

पाणौ यदि व्रणं नास्य, स हरेत् पाणिना विषम् ।
नाव्रणं विषमन्वेति, नास्ति पापमकुर्वतः ॥१२४॥

यो ह्यप्रदुष्टाय नराय दुष्यति, शुद्धाय सत्त्वाय निरज्जनाय ।
प्रत्येति पापं नु तदेव बालं, यथा हि सूक्ष्मः प्रतिवातरेणुः ॥१२५॥

उत्पदयन्ते गर्भमेके, निरयं पापिनस्तथा ।
स्वर्गं सुगतयो यन्ति, परिनिर्वान्त्यनाश्रवाः ॥१२६॥

न ह्यन्तरिक्षे न समुद्रमध्ये, न पर्वतानां विवरं प्रविश्य ।
न विदयते स जगति प्रदेशो, यतो हि मुच्येत नु पापकर्मणः ॥१२७॥

न ह्यन्तरिक्षे न समुद्रमध्ये, न पर्वतानां विवरं प्रविश्य ।
न विदयते स जगति प्रदेशो, यतो हि मुच्येत नु मृत्युपाशात् ॥१२८॥

## १०. दशमः दण्डवर्गः

सर्वे त्रस्यन्ति दण्डाद्वै, सर्व बिभ्यति मृत्युतः ।
आत्मानमुपमां कृत्वा, न हन्यान्न च घातयेत् ॥१२९॥

सर्वे त्रस्यन्ति दण्डाद्वै, सर्वेषां जीवितं प्रियम् ।
आत्मानमुपमां कृत्वा, न हन्यान्न च घातयेत् ॥१३०॥

सुखकामानि भूतानि, दण्डेन हि हिनस्ति यः ।
आत्मनः सुखमिच्छन् स न प्रेत्य लभते सुखम् ॥१३१॥

सुखकामानि भूतानि, दण्डेन हि हिनस्ति यः ।
आत्मनः सुखमिच्छन् स प्रेत्य वै लभते सुखम् ॥१३२॥

मा वोचः पुरुषं किञ्चित्, त्वां वक्ष्यन्ति तथैव ते ।
दुःखा हि संरम्भकथाः, त्वां स्पृशेयुः सदण्डकाः ॥१३३॥

नेर्यसे चेत्त्वमात्मानं, कांस्यमुपहतं यथा ।
एष प्राप्तोऽसि निर्वाणं, संरम्भस्ते न विद्यते ॥१३४॥

यथा दण्डेन गोपालो गाः प्राजयति गोचरम् ।
एवं जरा च मृत्युश्चायुः प्राजयति देहिनाम् ॥१३५॥

अथ पापानि कर्माणि, कुर्वन् बालो न बुध्यते ।
स्वकर्मभिश्च दुर्मेधास्तप्यते ह्यग्निदग्धवत् ॥१३६॥

दण्डेन यो ह्यदण्डयेषु, अप्रदुष्टेषु दुष्यति ।
दशस्वन्यतमं स्थानं, क्षिप्रमेव निगच्छति ॥१३७॥

वेदनां परुषां हानिं, शरीरस्य च भेदनम् ।
आबाधं वा हि गुरुकं, चित्तक्षेपं च प्राप्नुयात् ॥१३८॥

उपसर्गं राजतो वा, अभ्याख्यानं हि दारुणम् ।
परिक्षयं वा ज्ञातीनां, भोगानां वा प्रभञ्जनम् ॥१३९॥

अथ वास्य ह्यगाराणि, अग्निर्दहति पावकः ।
कायस्य भेदाद् दुष्प्रज्ञो, निरयं ह्युपपदयते ॥१४०॥

न नग्नचर्या न जटा न पङ्कः, तथोपवासः खलु भूमिशय्या ।
रजोजलं नोत्कटिकप्रधानं विशोधयेन्मर्त्यमतीर्णकांक्षम् ॥१४१॥

अलंकृतश्चापि शमं चरेद्यः, शान्तो दान्तो नियतो ब्रह्मचारी ।
सर्वेषु भूतेषु निधाय दण्डं, स ब्राह्मणः स श्रमणः स भिक्षुः ॥१४२॥

ह्रीनिषेधो न पुरुषः, कश्चिल्लोके हि विद्यते! ।
यो निन्दां न प्रबोधयति, अश्वो भद्रः कशामिव ॥१४३॥

भद्रो यथाश्वः कशया निविष्टः, आतापसंवेगयुता भवेयुः ।
शीलेन वीर्येण च श्रद्धया वा, समाधिना धर्मविनिश्चयेन ।
सम्पन्नविद्याचरणा प्रतिस्मृता जहास्यथ दुःखमिदं ह्यनल्पकम् ॥१४४॥

उदकं हि नयन्ति नेतृकाः, इषुकारा नमयन्ति तेजनम् ।
नमयन्ति हि दारु तक्षकाः , आत्मानं दमयन्ति पण्डिताः ॥१४५॥

**११. एकादशः जरावर्गः**

को नु हास; क आनन्दो नित्यं प्रज्वलिते सति!
अन्धकारावृता यूयं गवेषयथ दीपकम् ॥१४६॥

पश्य चित्रकृतं बिम्बमरुष्कायं समुच्छ्रितम् ।
आतुरं बहुसङ्कल्पं, यस्य नास्ति ध्रुवा स्थितिः ॥१४७॥

परिजीर्णमिदं रूपं रोगनीडं प्रभङ्गुरम् ।
भिद्यते पूतिसन्देहो मरणान्तं हि जीवितम् ॥१४८॥

इमानि यान्यपास्तानि, अलाबूनीव शारदे ।
कपोतवर्णान्यस्थीनि, तानि दृष्ट्वा नु का रतिः! ॥१४९॥

अस्थ्नामस्ति पुरं ह्येतत्, मांसलोहितलेपनम् ।
जरा यत्र च मृत्युश्च, मानो म्रक्षः प्रतिष्ठितः ॥१५०॥

जीर्यन्ति वै राजरथाः सुचित्राः, एतच्छरीरं जरया ह्युपेतम् ।
सतां तं धर्मो न जरामुपैति, सभ्या हवै सत्पुरुषा वदन्ति ॥१५१॥

अल्पश्रुतोऽयं पुरुषो जीर्यते बलिवर्दवत् ।
वर्धन्ते तस्य मांसानि, प्रज्ञा त्वस्य न वर्धते ॥१५२॥

अनेकजातिसंसारमधाविषमितस्ततः ।
गृहकारं गवेषयन्, दुःखा जातिः पुनः पुनः ॥१५३॥

गृहकारक! दुष्टोऽसिं, (पुनः) गेहं नैव करिष्यसि!
सर्वास्त पार्शुका भग्नाः, गृहकूटं विसंस्कृतम् ।

विसंस्कारगतं चित्तं, तृष्णानां क्षयमध्यगात् ॥१५४॥

अचरित्वा ब्रह्मचर्यम् , अलब्ध्वा यौवने धनम् ।
जीर्णक्रौञ्चाः क्षीणमत्स्ये यथा ध्यायन्ति पल्वले ॥१५५॥

अचरित्वा ब्रह्मचर्यम् , अलब्ध्वा यौवने धनम् ।
पुराणान्येव स्तुन्वन्तः शेरते भग्नचापवत् ॥१५६॥

**१२. द्वादशः आत्मवर्गः**

जानीयात् प्रियमात्मानम्, इमं रक्षेत् सुरक्षितम् ।
त्रिषु चान्यतमं यामं, पण्डितः प्रतिजाग्रियात् ॥१५७॥

आत्मानमेव प्रथमं, प्रतिरूपं निवेशयेत् ।
अथायमन्यमनुशिष्यात् , क्लिश्येदेवं न पण्डितः ॥१५८॥

आत्मानं चेत्तथा कुर्यात् , यथान्य उपदिश्यते ।
परं सुदान्तो दमयेत् , आत्मा हि किल दुर्दमः ॥१५९॥

आत्मा वै आत्मनो नाथ;, को नाथो हि परो भवेत् ।
आत्मना हि सुदान्तेन, नाथं प्राप्नोति दुर्लभम् ॥१६०॥

आत्मनैव कृतं पापमात्मजं ह्यात्मसम्भवम् ।
अभिमथ्नाति दुर्बुद्धिं, वज्रमश्ममणिं यथा ॥१६१॥

यस्यात्यन्तं हि दौःशील्यं मालुवाततशालवत् ।
करोति स तथात्मानम् द्विट्, यथैनं हि वाञ्छति ॥१६२॥

सुकराणि ह्यसाधूनि, आत्मनश्चाहितानि वै ।
यद्वै हितं च साधु च, तद्वै परमदुष्करम् ॥१६३॥

शासनमर्हतां यद्वै, आर्याणां धर्मजीविनाम् ।
प्रतिक्रोशति दुर्मेधा;, दृष्टिं निःश्रित्य पापिकाम् ॥
फलानि काष्ठकस्येव, आत्मघाताय वर्धते ॥१६४॥

आत्मना हि कृतं पापमात्मना संक्लिश्यति ।
आत्मना चाकृतं पापमात्मनैव विशुध्यति ।

शुद्धिरशुद्धिः प्रत्यात्ममन्यो नान्यं विशोधयेत् ॥१६५॥

आत्मनोऽर्थं परार्थेन बहुनापि न हापयेत् ।
आत्मनोऽर्थमभिज्ञाय, सदर्थप्रसृतो भवेत् ॥१६६॥

## **१३. त्रयोदशः लोकवर्गः**

हीनं धर्मं न सेवेत, प्रमादेन न संवसेत् ।
मिथ्यादृष्टिं न सेवेत, न स्याल्लोकस्य वर्धनः ॥१६७॥

उत्तिष्ठेन्न प्रमाद्येत, धर्मं सुचरितं चरेत् ।
धर्मचारी सुखं शेते, अस्मिन् लोके परत्र च ॥१६८॥

धर्मं चरेत् सुचरितं, न नं दुश्चरितं चरेत् ।
धर्मचारी सुखं शेते, अस्मिन् लोके परत्र च ॥१६९॥

यथा बुद्बुदकं पश्येद्, यथा पश्येन्मरीचिकाम् ।
एवं लोकं नु पश्यन्तं, मृत्युराजो न पश्यति ॥१७०॥

एत, पश्यतेमं लोकं, चित्रं राजरथोपमम् ।
यत्र बाला विषीदन्ति, नास्ति सङ्गो विजानताम् ॥१७१॥

यश्च पूर्वं प्रमाद्यापि, पश्चात् स न प्रमाद्यति ।
प्रभासयति लोकं वै, अभ्रमुक्तो यथा शशी ॥१७२॥

यस्य पापं कृतं कर्म, कुशलेन पिधीयते ।
प्रभासयति लोकं वै, अभ्रान्मुक्तो यथा शशी ॥१७३॥

चक्षुर्विहीनो लोकोऽयं, तनुकोऽत्र विपश्यति ।
पक्षी यथा जालमुक्तः, अल्पः स्वर्गं गमिष्यति ॥१७४॥

हंसाः सूर्यपथे यन्ति, आकाशे यन्ति ऋद्धिकाः ।
धीरा लोकाद्धि नीयन्ते जित्वा मारं ससेनकम् ॥१७५॥

धर्ममेकमतीतस्य, प्राणिनोऽसत्यभाषिणः ।
वितृष्णपरलोकस्य, नास्ति पापम कृत्यकम् ॥१७६॥

स्वर्गं न गच्छन्ति कदापि लोभिनो, दानं प्रशस्तं न कदापि मूर्खैः ।

धीरश्च दानं ह्यनुमोदमानः, सुखी भवत्यत्र परत्र लोके ॥१७७॥

पृथिव्याश्चैकराज्याद्वै, स्वर्गस्य गमनादथ ।
श्रेयसी स्त्रोतआपत्तिः, सर्वलोकाधिपत्यतः ॥१७८॥

## १४. चतुर्दशः बुद्धवर्गः

यस्य जितं नावजीयते, जितमस्य न याति कश्चिल्लोके ।
तं बुद्धमनन्तगोचरम्, अपदं केन पदेन नेष्यथ! ॥१७९॥

यस्य जालिनी विषात्मिका, तृष्णा नास्ति क्वचिन्नेतुम् ।
तं बुद्धमनन्तगोचरम्, अपदं केन पदेन नेष्यथ!॥१८०॥

ये ध्यानप्रसृता धीराः, नैष्कर्म्योपशमे रताः ।
देवास्तेभ्यः स्पृहयन्ति बुद्धेभ्यः स्मरणशीलेभ्यः ॥१८१॥

कृच्छ्रा मनुष्यताप्राप्तिः, कृच्छ्रं मानवजीवनम् ।
कृच्छ्रं सद्धर्मश्रवणं, कृच्छ्रा बुद्धस्थितिर्भृशम् ॥१८२॥

सर्वपापस्याकरणं कुशलस्योपसम्पदा ।
स्वचित्तपर्यवदानम् , एतद् बुद्धानुशासनम् ॥१८३॥

क्षान्तिः परमं तपस्तितिक्षा, निर्वाणं परमं वदन्ति बुद्धाः ।
नहि प्रव्रजितः परोपघाती, श्रमणो भवति परं विहेठमानः ॥१८४॥

अनपवादोऽनघातः, प्रातिमोक्षे च संवरः ।
मात्राज्ञता च भक्ते वै, प्रान्ते च शयनासनम् ।
आयोगश्चाधिचित्तं वै, एतद् बुद्धानुशासनम् ॥१८५॥

न कार्षापणवर्षेण, तृप्तिः कामेषु विद्यते ।
अल्पस्वादयुतान् दुःखान् , कामान् विज्ञाय पण्डितः ॥१८६॥

अपि दिव्येषु कामेषु स रतिं नाधिगच्छति ।
तृष्णाक्षयरतश्चासौ सम्यक्सम्बुद्धश्रावकः ॥१८७॥

बहु वै शरणं यन्ति, पर्वतांश्च वनानि च ।

आरामवृक्षचैत्यानि, मनुष्या भयतर्जिताः ॥१८८॥

नैतत् खलु शरणं क्षेमं, नैतच्छरणमुत्तमम् ।
नैतत् शरणमागत्य, सर्वदुःखात् प्रमुच्यते ॥१८९॥

यश्च बुद्धं च धर्मं च, सङ्घं च शरणं गतः ।
आर्यसत्यानि चत्वारि, पश्यति सम्यक्प्रज्ञया ॥१९०॥

दुःखं दुःखसमुत्पादं, दुःखस्य समतिक्रमम् ।
आर्यं चाष्टाङ्गिकं मार्गं दुःखोपशमगामिनम् ॥१९१॥

एतत् खलु शरणं क्षेमम्, एतच्छरणमुत्तमम् ।
एतच्छरणमागत्य सर्वदुःखात् प्रमुच्यते ॥१९२॥

दुर्लभः पुरुषः श्रेष्ठो न स सर्वत्र जायते ।
यत्र स जायते धीरस्तत् कुलं सुखमेधते ॥१९३॥

बुद्धोत्पादः सुखः प्रोक्तः, सुखा सद्धर्मदेशना ।
सुखा सङ्घस्य सामग्री, समग्राणां तपः सुखम् ॥१९४॥

पूज्यान् पूजयतो बुद्धान्, यदि वा श्रावकानथ ।
प्रपञ्चसमतिक्रान्तान्, तीर्णशोकपरिद्रवान् ॥१९५॥

ताँस्तादृशः पूजयतो निर्वृतानकुतोभयान् ।
न शक्यं पुण्यं सङ्ख्यातुमियन्मात्रं तु केनचित् ॥१९६॥

## १५. पञ्चदशः सुखवर्गः

सुसुखं बत जीवामो, यथा वैरिष्ववैरिणः ।
वैरिष्वपि मनुष्येषु, विहरामो न्ववैरिणः ॥१९७॥

सुसुखं बत जीवामः, आतुरेषु त्वनातुराः ।
आतुरेषु मनुष्येषु, विहरामो ह्यनातुराः ॥१९८॥

सुसुखं बत जीवामः, उत्सुकेषु त्वनुत्सुकाः ।
उत्सुकेषु मनुष्येषु, विहरामो ह्यनुत्सुकाः ॥१९९॥

सुसुखं बत जीवामो, येषां नो नास्ति किञ्चन ।
प्रीतिभक्षा भविष्यामः, देवा आभास्वरा यथा ॥२००॥

जयो वैरं प्रसूतेऽत्र, दुःखं शेते पराजितः ।
उपशान्तः सुखं शेते, हित्वा जयपराजयौ ॥२०१॥

अग्नी रागसमो नान्यः, नास्ति द्वेषसमः कलिः ।
न स्कन्ध इव दुःखानि, नास्ति शान्तिपरं सुखम् ॥२०२॥

जिघत्सा परमो रोगः, संस्कारः परमं दुःखम् ।
एतज्ज्ञात्वा यथाभूतं निर्वाणं परमं सुखम् ॥२०३॥

आरोग्यपरमा लाभाः, सन्तुष्टिः परमं धनम् ।
विश्वासः परमो ज्ञातिः, निर्वाणं परमं सुखम् ॥२०४॥

प्रविवेकरसं पीत्वा, रसं चोपशमस्य वै ।
निद्दरो भवति निष्पापो, धर्मप्रीतिरसं पिबन् ॥२०५॥

साधु दर्शनमार्याणाम् , सन्निवासः सदा सुखम् ।
अदर्शनेन बालानां नित्यमेव सुखी भवेत् ॥२०६॥

बालसङ्गतचारी हि, दीर्घमध्वानं शोचति ।
दुःखो बालेन संवासः अमित्रेणेव सर्वदा ।
धीरश्च सुखसंवासः, यथा ज्ञातिसमागमः ॥२०७॥

धीरं च प्राज्ञं च बहुश्रुतं च, धौरेयशीलं व्रतवन्तमार्यम् ।
तं तादृशं सत्पुरुषं सुबुद्धिं, भजेत नक्षत्रपथं यथा शशी ॥२०८॥

## १६. षोडशः प्रियवर्गः

युञ्जन्नयोगे आत्मानम् , तथा योगेऽन्वयोजयन् ।
अर्थं हित्वा प्रियग्राही, ईर्ष्येदात्मानुयोगिनम् ॥२०९॥

न प्रियैः सङ्गतिं कुर्यात् , अप्रियैश्च कदाचन ।
प्रियस्यादर्शनं दुःखमप्रियाणां च दर्शनम् ॥२१०॥

तस्मात् प्रियं न कुर्याद्धि, प्रियापायो हि पापकः ।
तेषां न जायते ग्रन्थिः, नास्ति येषां प्रियाप्रियम् ॥२११॥

प्रियतो जायते शोकः, प्रियतो जायते भयम् ।
प्रियतो विप्रमुक्तस्य, नास्ति शोकः कुतो भयम् !॥२१२॥

प्रेमतो जायते शोकः, प्रेमतो जायते भयम् ।
प्रेमतो विप्रमुक्तस्य, नास्ति शोकः कुतो भयम् !॥२१३॥

रत्या हि जायते शोकः, रत्या वै जायते भयम् ।
रत्या हि विप्रमुक्तस्य, नास्ति शोकः कुतो भयम्! ॥२१४॥

कामतो जायते शोकः, कामतो जायते भयम् ।
कामतो विप्रमुक्तस्य, नास्ति शोकः कुतो भयम्! ॥२१५॥

तृष्णाया जायते शोकः, तृष्णाया जायते भयम् ।
तृष्णाया विप्रमुक्तस्य, नास्ति शोकः कुतो भयम् !॥२१६॥

शीलदर्शनसम्पन्नं, धर्मस्थं सत्यवादिनम् ।
आत्मनः कर्म कुर्वन्तं, तं जनः कुरुते प्रियम् ॥२१७॥

अनाख्याते छन्दजातो, मनसा च स्फुटो भवेत् ।
अबद्धचित्तः कामेषूर्ध्वस्त्रोता अभिधीयते ॥२१८॥

जनं प्रवासिनं कश्चिद् दूरतः स्वस्थमागतम् ।
सुहृदो ज्ञातिमित्राणि अभिनन्दन्ति चागतम् ॥२१९॥

तथैव कृतपुण्यं तम् , अस्माल्लोकात् परं गतम् ।
पुण्यानि प्रतिगृह्णन्ति, प्रियं ज्ञातिमिवागतम् ॥२२०॥

## १७. सप्तदशः क्रोधवर्गः

क्रोधं जहीत, प्रजहीत मानं, संयोजनं सर्वमतिक्रमध्वम् ।
असज्यमानं खलु नामरुपयोरकिञ्चनं नानुपतन्ति तापाः ॥२२१॥

यो वै क्रोधमुत्पतितं, रथं भ्रान्तं च धारयेत् ।

तमहं सारथिं वच्मि, रश्मिग्राहोऽपरो जनः ॥२२२॥

अक्रोधेन जयेत् क्रोधमसाधुं साधुना जयेत् ।
जयेत् कदर्यं दानेन, सत्येनालीकवादिनम् ॥२२३॥

सत्यं भणेन्न क्रुध्येद्वै, दद्यादल्पं नु याचितम् ।
प्राप्नोति देवतावासं स्थानैरेभिस्त्रिभिर्नरः ॥२२४॥

अहिंसका ये मुनयो, नित्यं कायेन संवृताः ।
ते गच्छन्त्यच्युतं स्थानं, यत्र गत्वा न चिन्त्यते ॥२२५॥

सदैव जाग्रतां शिक्षाकामानां च दिवानिशम् । निर्वाणमधिमुक्तानामस्तं गच्छन्ति आश्रवाः ॥२२६॥

पौराणमेतदतुल! नैतदद्यतनमिव ।
निन्दन्ति तुष्णीमासीनं, निन्दन्ति बहुभाणिनम् ॥
निन्दन्ति मितवक्तारं, नास्ति लोके ह्यनिन्दितः ॥२२७॥

न चाभून्न भविष्यति, नेदानीमस्ति कश्चन ।
एकान्तं पुरुषो निन्द्यः, एकान्तं वा प्रशंसितः ॥२२८॥

यं चेद् विज्ञाः प्रशंसन्ति, अनुविच्य दिनं दिनम् ।
अच्छिद्रवृत्तिं सुधियं, प्रज्ञाशीलसमाहितम् ॥२२९॥

निष्कं जम्बूनदस्येव, कस्तं निन्दितुमर्हति!
देवा अपि प्रशंसन्ति, ब्रह्मणापि प्रशंसितः ॥२३०॥

कायप्रकोपं रक्षेद्वै, कायेन संवृतो भवेत् ।
कायदुश्चरितं हित्वा, कायेन (सु) चरितं चरेत् ॥२३१॥

वाक्प्रकोपं च रक्षेद्वै, वचसा संवृतो भवेत् ।
वचोदुश्चरितं हित्वा, वाचा सुचरितं चरेत् ॥२३२॥

मनःप्रकोपं रक्षेद्वै, मनसा संवृतो भवेत् ।
मनोदुश्चरितं हित्वा, मनसा (सु) चरितं चरेत् ॥२३३॥

कायेन संवृता धीराः, अथ वाचा सुसंवृताः ।
मनसा संवृता धीराः, ते वै सुपरिसंवृताः ।।२३४।।

## **१८. अष्टादशः मलवर्गः**

पाण्डुपलाशवदिदानीमसि, यमपुरुषा अपि त्वामुपस्थिताः ।
उद्योगमुखे च तिष्ठसि, पाथेयमपि ते न विद्यते ।।२३५।।

स द्वीपमात्मनः कुरु, क्षिप्रं व्यायच्छ, पण्डितो भव ।
निर्धूतमलो निरञ्जनो, दिव्यां प्राप्स्यस्यार्यजनस्य भूमिम् ।।२३६।।

अपनीतवयाश्च साम्प्रतं, संयातोऽसि यमस्य सन्तिकम् ।
वासोऽपि च ते नु नास्ति मध्ये, पाथेयमपि ते न विद्यते ।।२३७।।

स कुरु द्वीपमात्मनः, क्षिप्रं व्यायच्छ, पण्डितो भव ।
निर्धूतमलो निरञ्जनो, न पुनर्जातिजरे उपैष्यसि ।।२३८।।

आनुपूर्व्येण मेधावी, स्तोकं स्तोकं क्षणे क्षणे ।
कर्मारो रजतस्येव, निर्धमेन्मलमात्मनः ।।२३९।।

अयस इव मलं समुत्थितं, तत उत्थाय तदेव खादति ।
एवमतिधावनचारिणं स्वानि कर्माणि नयन्ति दुर्गतिम् ।।२४०।।

अस्वाध्यायमला मन्त्राः, अनुत्थानमलं गृहम् ।
मलं वर्णस्य कौसीद्यं, प्रमादो रक्षतो मलम् ।।२४१।।

स्त्रिया मलं दुश्चरितं, मात्सर्यं ददतो मलम् ।
मलं वै पापका धर्माः, अस्मिन् लोके परत्र च ।।२४२।।

ततो मलान्मलतरम् , अविद्या परमं मलम् ।
प्रहायैतन्मलं यूयं, निर्मलाः सन्तु भिक्षवः ।।२४३।।

सुजीवमह्रीकेण, काकशूरेण ध्वंसिना ।
प्रस्कन्दिना प्रगल्भेन, संक्लिष्टेन सुजीवितम् ।।२४४।।

ह्रीमता च नु दुर्जीवं, नित्यं शुचिगवेषिणा ।

अलीनेनाप्रगल्भेन, शुद्धाजीवेन पश्यता ।।२४५।।

यः प्राणमतिपातयति, मृषावादं च भाषते ।
लोके चादत्तमादत्ते, परदारांँश्च गच्छति ।।२४६।।

सुरामैरेयपानं च, यो युनक्ति नरः सदा ।
इहैवमेष लोके वै, मूलं खनति चात्मनः ।।२४७।।

एवं भोः पुरुष! जानीहि, पापधर्मा असंयताः ।
मा त्वां लोभोऽन्वधर्मश्च चिरं दुःखाय रन्धतु ।।२४८।।

ददाति वै यथाश्रद्धं, यथाप्रीति च यो जनः ।
यस्तत्र मूको भवति, परेषां पानभोजने ।
दिवा वा यदि वा रात्रौ समाधिं नाधिगच्छति ।।२४९।।

यस्य चैतत् समुच्छिन्नं, मूलघात्यं समुद्धतम् ।
दिवा वा यदि वा रात्रौ समाधिं सोऽधिगच्छति ।।२५०।।

नास्ति रागसमो वह्निः, नास्ति द्वेषसमो ग्रहः ।
नास्ति मोहसमं जालं, नास्ति तृष्णासमा नदी ।।२५१।।

सुदर्शं वद्यमन्येषाम् , दुर्दर्शं पुनरात्मनः ।
परेषां स हि वद्यान्यवपुनाति यथा बुसम् ।
छादयत्यात्मनो भूयः कलिमिव कितवाच्छठः ।।२५२।।

उद्ध्यानसंज्ञिनो नित्यं परवद्यं प्रपश्यतः ।
आसवास्तस्य वर्धन्ते, आरात् स आसवक्षयात् ।।२५३।।

आकाशे च पदं नास्ति, श्रमणो नास्ति बाह्यतः।
प्रजाः प्रपञ्चाभिरताः, निष्प्रपञ्चास्तथागताः।।२५४।।

आकाशे च पदं नास्ति, श्रमणो नास्ति बाह्यतः ।
संस्काराः शाश्वता नैव, बुद्धानामस्ति नेङ्गितम् ।।२५५।।

## **१९. एकोनविंशः धर्मस्थवर्गः**

तेन नास्ति स धर्मस्थो, येनार्थं साहसान्नयेत् ।

अर्थानर्थाविभौ यश्च, निश्चिनुयात् स पण्डितः।।२५६।।

असाहसेन धर्मेण, समेन नयते परान् ।
धर्मस्य गुप्तो मेधावी, धर्मस्थ इति प्रोच्यते ॥ २५७॥

पण्डितो नहि तेनास्ति, यावता बहु भाषते ।
क्षेमी ह्यवैरी ह्यभयः, पण्डित इति कथ्यते ॥२५८॥

न तावता धर्मधरो, यावता बहु भाषते ।
यश्चाल्पमपि श्रुत्वैव, धर्मं कायेन पश्यति।
स वै धर्मधरः प्रोक्तः यो धर्मान्न प्रमाद्यति ॥२५९॥

स्थविरो नहि तेनास्ति, येनास्य पलितं शिरः ।
परिपक्वं वयस्तस्य, 'मोघजीर्णः' स उच्यते ॥२६०॥

यस्मिन् सत्यं च धर्मश्च, अहिंसा संयमो दमः।
स वै वान्तमलो धीरः, स्थविर इति कथ्यते॥२६१॥

न वाक्करणमात्रेण, वर्णाधिकतयाऽथ वा ॥
साधुरूपो नरः सोऽस्ति, ईर्ष्यकी मत्सरी शठः॥२६२॥

यस्य चैतत् समुच्छिन्नं, मूलघात्यं समूहतम् ।
स वान्तदोषो मेधावी, साधुरूपः स कथ्यते ॥२६३॥

मौण्ड्येन श्रमणो नैव, अव्रतश्च मृषा भणन् ।
इच्छालोभसमापन्नः, श्रमणः किं भविष्यति! ॥२६४॥

यः शमयति पापानि, अणुस्थूलानि सर्वशः।
शमितत्वाद्धि पापानां, श्रमण इति कथ्यते ॥२६५॥

न तेन भिक्षुर्भवति, यावता भिक्षते परान् ।
विषमं धर्ममादाय भिक्षुः स्यान्नैव तावता॥२६६॥

वाहयित्वा पुण्यपापं, भवति, ब्रह्मचर्यवान् ।
लोके चरति सङ्ख्यातः, स वै भिक्षुरिहोच्यते ॥२६७॥

मौनेन तु मुनिर्नैव, सोऽविद्वान् मूढसंज्ञकः ।

तुलावद् यश्च प्रगृह्य वरमादाय पण्डितः ॥२६८॥

परिवर्जयति पापानि, स मुनिस्तेन स मुनिः ।
मनुते य उभौ लोकौ, मुनिस्तेन स कथ्यते ।।२६९।।

न च तेन स आर्य:स्यात्, येन प्राणान् हिनस्ति सः ।
अहिंस्त्रः सर्वप्राणानामार्य इति स कथ्यते।।२७०।।

न शीलव्रतमात्रेण, बाहुश्रुत्येन वा पुनः ।
समाधिलाभमात्रेण, विविक्तशयनेन वा ।।२७१।।

स्पृशामि नैष्काम्यसुखम्, अपृथग्जनसेवितम् ।
भिक्षो! विश्वासं मा पादीः, अप्राप्त्वा आश्रवक्षयम् ।।२७२।।

## २०. विंशः मार्गवर्गः

मार्गेष्वष्टाङ्गिकः श्रेष्ठः, सत्येष्वार्यचतुष्टयम् ।
श्रेष्ठो विरागो धर्मेषु, द्विपदेषु चक्षुषा युतः ।।२७३।।

एष मार्गोऽस्ति नास्त्यन्यो, दर्शनस्य विशुद्धिकृत् ।
एनं हि यूयं गृह्णत, मारस्यैतत् प्रमोहनम् ।।२७४।।

एनं हित यूयं प्रतिपन्नाः, दुःखस्यान्तं करिष्यथ ।
आख्यातो वै मया मार्गः, ज्ञात्वा शल्यस्य कृन्तनम् ।।२७५।।

युष्माभिः कार्यमातप्यमाख्यातारस्तथागताः ।
प्रतिपन्नाः प्रमोक्ष्यन्ते, ध्यायिनो मारबन्धनात् ।।२७६।।

'अनित्याः सर्वसंस्काराः' यो हि बुद्ध्या प्रपश्यति ।
निर्विन्दत्यथ दुःखानि, एष मार्गो विशुद्धिकृत् ।।२७७।।

'दुःखा हि सर्वसंस्काराः' यो हि बुद्ध्या प्रपश्यति ।
निर्विन्दत्यथ दुःखानि, एष मार्गो विशुद्धिकृत् ।।२७८।।

'सर्वे धर्मा अनात्मानः' यो हि बुद्ध्या प्रपश्यति ।
निर्विन्दत्यथ दुःखानि, एष मार्गो विशुद्धिकृत् ।।२७९।।

उत्थानकाले न करोति उत्थितिं चालस्ययुक्तोऽथ युवा बली वा ।

संसन्नसङ्कल्पमनाः कुशीदः, मार्गं हि बुद्धेरलसो न विन्दति ॥२८०॥

वाचानुरक्षो मनसा सुसंवृतः, कायेन चैवाकुशलं न कुर्यात् ।
विशोधयेत् कर्मपथत्रयं वै, आराधयेन्मार्गमृषिप्रवेदितम् ॥२८१॥

योगाद् वै जायते भूरि, अयोगात् भूरिसंक्षयः ।
एतं द्वेधापथं ज्ञात्वा, भवाय विभवाय च ॥
निवेशयेत् तथात्मानं, यथा भूरि प्रवर्धते॥ २८२॥

वनं छिन्दथ, मा वृक्षं, वनतो जायते भयम् ।
छित्त्वा वनं च वनथं, निर्वणाः सन्तु भिक्षवः ॥२८३॥

यावद्धि वनथोऽच्छिन्नोऽनुमात्रं नुर्हि नारीषु ।
बद्धचित्तः स तावद्वै, क्षीरप इव मातरि ॥२८४॥

आत्मनः स्नेहमुच्छिन्धि, शारदं कुमुदं यथा।
सुगतप्रोक्तनिर्वाणं, गम्यः शान्तिपथो ह्ययम् ॥२८५॥

'वर्षास्विह वसिष्यामि, इह हेमन्तग्रीष्मयोः।'
इति बालश्चिन्तयति, अन्तरायं न बुध्यते ॥२८६॥

तं पुत्रपशुसम्पृक्तं व्यासक्तमनसं नरम् ।
गच्छति मृत्युरादाय सुप्तं ग्रामं महौघवत् ॥२८७॥

न सन्ति पुत्रास्त्राणाय, न पिता नापि बान्धवाः ।
अन्तकेनाधिपन्नस्य, त्राणतास्ति न ज्ञातिषु ॥२८८॥

एतमर्थवशं ज्ञात्वा पण्डितः शीलसंवृतः ।
निर्वाणगमनं मार्गं क्षिप्रमेव विशोधयेत् ॥२८९॥

## २१. एकविंशः प्रकीर्णकवर्गः

मात्रासुखपरित्यागात् पश्येच्चेद् विपुलं सुखम् ।
त्यजेन्मात्रासुखं धीरः सम्पश्यन् विपुलं सुखम् ॥२९०॥

परदुःखोपधानेन, आत्मनः सुखमिच्छति ।

वैरसंसर्गसंसक्तो वैरान्न परिमुच्यते ॥२९१॥

यद्यत् कृत्यमपविद्धम् , भूयोऽकृत्यं करोति यः ।
उन्मलानां प्रमत्तानां, तेषां वर्धन्त आश्रवाः ॥२९२॥

येषां च सुसमारब्धा, नित्यं कायगता स्मृतिः ।
अकृत्यं ते न सेवन्ते, कृत्ये सातत्यकारिणः ।
सतां च सम्प्रजानानामस्तं गच्छन्ति आश्रवाः ॥२९३॥

मातरं पितरं हत्वा, राजानौ द्वौ च क्षत्रियौ ।
राष्ट्रं सानुचरं हत्वा, अनघो याति ब्राह्मणः ॥२९४॥

मातरं पितरं हत्वा, राजानौ द्वौ च श्रोत्रियौ ।
व्याघ्रं च पञ्चमं हत्वा, अनघो याति ब्राह्मणः ॥२९५॥

सुप्रबुद्धं प्रबुध्यन्ते, गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च, नित्यं बुद्धगता स्मृतिः ॥२९६॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च, नित्यं धर्मगता स्मृतिः॥२९७॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च, नित्यं सङ्घगता स्मृतिः ॥२९८॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च, नित्यं कायगता स्मृतिः ॥२९९॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च, अहिंसायां रतं मनः ॥३००॥

सुप्रबुद्धाः प्रबुध्यन्ते, गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च, भावनायां रतं मनः ॥३०१॥

दुष्प्रव्रजं दुरभिरमं, दुरावासं गृहं ततः ।
दुःखश्चासमसंवासः, दुःखानुपतिताध्वगः ॥३०२॥

अध्वगो न भवेत्  तस्मान्न दुःखपतितो भवेत् ॥

श्रद्धालुः, शीलसम्पन्नः, यशोभोगसमर्पितः।
यं यं प्रदेशं भजति, तत्र तत्रैव पूजितः ॥३०३॥

द्योतन्ते दूरतः सन्तः, हिमवान् पर्वतो यथा।
इहासन्तो न दृश्यन्ते, रात्रौ क्षिप्ता यथा शराः॥३०४॥

एकासनम् एकशय्यां चरन्नेकोऽन्वतन्द्रितः ।
दमयन्नेक आत्मानं, वनान्ते स रतो भवेत् ॥३०५॥

## २२. द्वाविंशः निरयवर्गः

अभूतवादी निरयं उपैति, यो वापि कृत्वा न करोमि चाह ।
उभावपि प्रेत्य समौ भविष्यतः, निहीनकृत्यौ मनुजौ परत्र ॥३०६॥

काषायकण्ठा बहवः पापधर्मा असंयताः ।
पापास्तेकर्मभिः पापैः निरयं यान्ति निश्चितम् ॥३०७॥

भुक्तं त्वयोगुलं श्रेयः, तप्तमग्निशिखोपमम् ।
यच्चेद् भुञ्जीत दुःशीलो राष्ट्रपिण्डमसंयतः ॥३०८॥

स्थानानि चत्वारि नरः प्रमत्तः, प्राप्नोत्यवश्यं परदारसेवी ।
अपुण्यलाभं न निकामशय्यां, निन्दां तृतीयां, निरयं चतुर्थम् ॥३०९॥

अपुण्यलाभश्च गतिश्च पापिका, रतिश्च भीतां प्रति तस्य स्तोका ।   राजा च
दण्डं प्रददात्यनल्पं तस्मान्न सेवेत नरः परस्त्रीः ॥३१०॥

कुशो यथा दुर्गृहीतो, हस्तमेवानुकृन्तति ।
श्रामण्यं दुष्परामृष्टं, निरयायोपकर्षति ॥३११॥

यत् किञ्चित् शिथिलं कर्म, संक्लिष्टं चैव यद् व्रतम् ।
सङ्कृच्छ्रं ब्रह्मचर्यं वै, न तदस्ति महाफलम् ॥३१२॥

कुर्याच्चेत् ननु कुर्वीत, दृढमेतत् पराक्रमेत् ।
शिथिला हि परिव्रज्या, भूय आकिरते रजः ॥३१३॥

अकृतं दुष्कृतं श्रेयः, पश्चात् तपति दुष्कृतम् ।
कृतं च सुकृतं श्रेयो, यत्कृत्वा नानुतप्यते ॥३१४॥

नगरं यथा प्रत्यन्तं, गुप्तमन्तश्च बाह्यतः ।
आत्मानं गोपयेदेवं क्षणो मा वै उपातिगाः ।
क्षणातीता हि शोचन्ति, निरयं ते समर्पिताः ॥३१५॥

अलज्ज्ये ये हि लज्जन्ते, लज्जन्ते च न लज्यके ।
मिथ्यादृष्टिसमादानाः, सत्त्वा गच्छन्ति दुर्गतिम् ॥३१६॥

अभये भयं पश्यन्ति, भये चाभयदर्शिनः ।
मिथ्यादृष्टिसमादानाः, सत्त्वा गच्छन्ति दुर्गतिम् ॥३१७॥

अवर्ज्ये वर्ज्यमतयो, वर्ज्ये चावर्ज्यदर्शिनः ।
मिथ्यादृष्टिसमादानाः, सत्त्वा गच्छन्ति दुर्गतिम् ॥३१८॥

वर्ज्यं च वर्ज्यतो ज्ञात्वा, अवर्ज्यं वै अवर्ज्यतः ।
सम्यग्दृष्टिसमादानाः, गच्छन्ति सुगतिं नराः ॥३१९॥

## २३. त्रयोविंशः नागवर्गः

संग्रामेऽहं यथा नागः चापवत् पतितं शरः ।
अतिवाक्यं तितिक्षिष्ये, दुःशीला बहवो जनाः ॥३२०॥

दान्तं नयन्ति समितिं, दान्तं राजाभिरोहति ।
दान्तः श्रेष्ठो मनुष्येषु, योऽतिवाक्यं तितिक्षति ॥३२१॥

वरमश्वतरा दान्ताः, आजानेयाश्च सैन्धवाः ।
कुञ्जराश्च महानागाः, आत्मदान्तस्ततो वरम् ॥३२२॥

न ह्येतैह यानैर्ना, गच्छेत् क्वाप्यगतां दिशम् ।
यथात्मना सुदान्तेन, दान्तो दान्तेन गच्छति ॥३२३॥

धनपालः कुञ्जरोऽयं कटकभेदी दुर्निवारः ।
बद्धः कबलं न भुंक्ते, स्मरति नागबलस्य कुञ्जरम् ॥३२४॥

मृद्धो यथा स्याद्धि महाघसश्च, निद्रायितः सम्परिवर्तशायी ।
निवापपुष्टो हि यथा वराहः, पुनः पुनर्गर्भमुपैति मन्दः ॥३२५॥

पुराऽचरच्चित्तमिदं यतस्ततः, यथेप्सितं यत्रकामं यथासुखम् ।
तदद्याहं योनिशो निग्रहीष्यामि गजं निगृह्णाति यथाङ्कुशेन ॥३२६॥

अप्रमादेन संयुक्ताः, स्वचित्तमनुरक्षथ ।
दुर्गादुद्धरतात्मानं, पङ्के सक्तो यथा गजः ॥३२७॥

कञ्चिल्लभेत चतुरं सहायं, सहचारिणं साधुविहारिधीरम् ।
अभिभूय सर्वांश्च परिश्रयान्वै, चरेद्धि तेनाप्तमनाः स धीमान् ॥३२८॥

न चेल्लभेत चतुरं सहायं सार्धञ्चरं साधुविहारिधीरम् ।
राजेव राष्ट्रं विजितं प्रहाय, एकश्चरेद्धस्तिपतिर्यथा वने ॥३२९॥

एकस्य चरितं श्रेयो, नास्ति बाले सहायता ।
एकश्चरेन्न च पापानि कुर्याद् , गजो यथा वै विचरत्यरण्ये ॥३३०॥

सुखाः सहायाः खलु अर्थजाते, तुष्टिः सुखा या इतरेतरेण ।
पुण्यं सुखं जीवितसंक्षये वै, सर्वस्य दुःखस्य सुखं प्रहाणम् ॥३३१॥

मातृसेवा सुखा लोके, पितृसेवा तथा सुखा ।
सुखा श्रमणता लोके, ब्राह्मण्यं च तथा सुखम् ॥३३२॥

सुखं यावज्जरं शीलं, सुखा श्रद्धा प्रतिष्ठिता ।
प्रज्ञालाभः सुखः प्रोक्तः, पापस्याकरणं सुखम् ॥३३३॥

## २४. चतुर्विंशः तृष्णावर्गः

मनुजस्य प्रमत्तचारिणस्तृष्णा वर्धते मालुवा लता इव ।
स प्लवते इहापरत्र च, फलमिच्छन् हि यथा वने कपिः ॥३३४॥

यमेषा जन्मिनी सहते तृष्णा लोके विषात्मिका ।
शोकास्तस्य प्रवर्धन्तेऽभिवृद्धमिव वीरणम् ॥३३५॥

यश्चैनां सहते जन्मिनीं तृष्णां लोके दुरत्ययाम् ।

शोकास्तस्य प्रपतन्ति, उदबिन्दुरिव पुष्करात् ॥३३६॥

तद् वो वादामि भद्रं वो यावन्त इह आगताः ।
मूलं खनत तृष्णायाः, उशीरार्थीव वीरणम् ।
मा वो नडवत् स्रोतो मारो भाङ्क्षीः पुनः पुनः ।।३३७।।

यथापि मूले ह्यनुपद्रवे दृढे, छिन्नोऽपि वृक्षः पुनरेव रोहति ।
एवं हि तृष्णानुशये अनूहते, निर्वर्तते दुःखमिदं पुनः पुनः ।।३३८।।

यस्य स्रोतांसि षट्त्रिंशत्, मनः प्रस्रवणानि स्युः ।
वाहा वहन्ति दुर्दृष्टिं, सङ्कल्पा रागनिःसृताः ।।३३९।।

स्रवन्ति सर्वस्रोतांसि, लता उद्भिद्य तिष्ठति ।
तां च दृष्ट्वा लतां जातां मूलं छिन्दत प्रज्ञया ।।३४०।।

स्रोतांसि स्निग्धानि च प्राणिनां स्युरथापि सौजन्ययुतानि तानि ।
स्रोतःसृतास्ते च सुखैषिणः स्यस्तथैव ते जातिजरोपगा नराः ।।३४१।।

तृष्णापुरस्कृता लोकाः भ्रमन्ति शशबद्धवत् ।
संयोजनासक्तचित्ताः दुःखं यान्ति पुनश्चिरम् ।।३४२।।

तृष्णापुरस्कृता लोकाः सर्पन्ति शशबद्धवत् ।
तृष्णां विनोदयेत्तस्मात् वैराग्यस्याभिलाषुकः ।।३४३।।

यो निर्वनतो वनाधिमुक्तो वनमुक्तो वनमेव धावति ।
तं पुद्गलमेव पश्यत, मुक्तो बन्धनमेव धावति ।।३४४।।

धीरा न तं दृढं बन्धनमाहुः, यदायसं दारुजबब्बजं च ।
सारक्तरक्ता मणिकुण्डलेषु पुत्रेषु दारेषु च या अपेक्षा ।।३४५।।

धीरा दृढ बन्धनमाहुरेतद् , अवहारि यच्छिथिलं दुष्प्रमोचम् ।
एतत्तु छित्त्वा नु परिव्रजन्ति, अनपेक्षिणः कामसुखं प्रहाय ।।३४६।।

ये रागरक्ता हि पतन्ति स्रोतः, स्वयंकृते मर्कटको हि जाले ।
एतत्तु छित्त्वा नु व्रजन्ति धीराः, अनपेक्षिणः सर्वदुःखं प्रहाय ।।३४७।।

मुञ्च पुरा मुञ्च पश्चात्, मध्ये मुञ्च भवस्य पारग!

सर्वत्र विमुक्तमानसो, न पुनर्जातिजरामुपेष्यसि ।।३४८।।

वितर्कमथितस्य प्राणिनस्तीव्ररागस्य शुभानदर्शिनः ।
भूयस्तृष्णा प्रवर्धते, एषा खल दृढं करोति बन्धनम् ॥३४९॥

वितर्कोपशमे रतो, ह्यशुभं भावयते सदा ।
एष खलु व्यन्तीकरिष्यति, एष छेत्स्यति मारबन्धनम् ॥३५०॥

निष्ठां गतो ह्यसन्त्रासो, तीततृष्णो ह्यनङ्गणः ।
अच्छिनद् भवशल्यानि, अन्तिमोऽयं समुच्छ्रयः ॥३५१॥

वीततृष्णो ह्यनादानो, निरुक्तिपदकोविदः ।
अक्षराणां सन्निपातं वेत्ति पूर्वापराणि च ।
स वै अन्तिमशारीरो, महाप्राज्ञः स उच्यते ॥३५२॥

सर्वाभिभूः सर्वविच्चाहमस्मि, सर्वेषु धर्मेषु अनूपलिप्तः ।
सर्वञ्जहस्तृष्णाक्षये विमुक्तः, स्वयं ह्यभिज्ञाय कमुद्दिशेयम्! ॥३५३॥

धर्मदानं सर्वदानं जयति, धर्मरसो सर्वरसं जयति ।
धर्मरतिः सर्वरतिं जयति, तृष्णाक्षयः सर्वदुःखं जयति ॥३५४॥

भोगाः दुर्मेधसं घ्नन्ति, न चेत् पारगवेषिणः ।
हन्त्यन्यमिव चात्मानं, दुर्मेधा भोगतृष्णया ॥३५५॥

क्षेत्राणि तृणदोषाणि, रागदोषा इयं प्रजा ।
तस्माद्धि वीतरागेषु, दत्तमस्ति महाफलम् ॥३५६॥

क्षेत्राणि तृणदोषाणि, द्वेषदोषा इयं प्रजा ।
वीतद्वेषेषु तस्माद्धि, दत्तमस्ति महाफलम् ॥३५७॥

क्षेत्राणि तृणदोषाणि, मोहदोषा इयं प्रजा ।
तस्माद्धि वीतमोहेषु, दत्तमस्ति महाफलम् ॥३५८॥

क्षेत्राणि तृणदोषाणि, इच्छादोषा इयं प्रजा ।
विगतेच्छुषु तस्माद्धि, दत्तमस्ति महाफलम् ॥३५९॥

क्षेत्राणि तृणदोषाणि, तृष्णादोषा इयं प्रजा ।

तस्माद्धि वीतमोहेषु, दत्तमस्ति महाफलम् ॥

## २५. पञ्चविंशः भिक्षुवर्गः

चक्षुषा संवरः साधुः साधुः क्षोत्रेण संवरः ।
घ्राणेन संवरः साधुः जिह्वया साधुसंवरः ॥३६०॥

कायेन संवरः साधुः साधुर्वाचा हि संवरः ।
मनसा संवरः साधुः साधुः सर्वत्र संवरः ॥
सर्वत्र संवृतो भिक्षुः, सर्वदुःखात् प्रमुच्यते ॥३६१॥

संयतो हस्तपादाभ्यामथ वाचा हि चोत्तमः ।
समाहितोऽध्यात्मरतः, सन्तुष्टो भिक्षुरुच्यते ॥३६२॥

मुखेन संयतो भिक्षुर्मन्त्रभाणी ह्यनुद्धतः ।
दीपयत्यर्थधर्मौ च, मधुरं तस्य भाषितम् ॥३६३॥

धर्मारामो धर्मरतो, धर्मं चानुविचिन्तयन् ।
धर्मं ह्यनुस्मरन् भिक्षुः, धर्मान्न परिहीयते ॥३६४॥

स्वलांभ नाति मन्येत, नान्येभ्यः स्पृहयँश्चरेत् ।
अन्येभ्यः स्पृहयन् भिक्षुः, समाधिं नाधिगच्छति ॥३६५॥

अल्पलाभोऽपि चेद् भिक्षुः स्वलाभं नाति मन्यते ।
तं वै देवाः प्रशंसन्ति, शुद्धाजीवमतन्द्रितम् ॥३६६॥

सर्वशो नामरूपे वै, यस्य नास्ति ममायितम् ।
याऽसति च न शोचति, भिक्षुः स खलु कथ्यते ॥३६७॥

मैत्रीविहारी यो भिक्षुः प्रसन्नो बुद्धशासने ।
अधिगच्छेत् पदं शान्तं संस्कारोपशमं सुखम् ॥३६८॥

सिञ्च भिक्षो! इमां नावं, सिक्ता लाघवमेष्यति ।
छित्त्वा रागं च द्वेषं च, ततो निर्वाणमेष्यसि ॥३६९॥

पञ्च छिन्द्यात् पञ्च जह्यात् , भावयेत् पञ्च चोत्तरम् ।
पञ्चसङ्गातिगो भिक्षुः, औघतीर्णो हि कथ्यते ॥३७०॥

ध्याय भिक्षो मा प्रमद, मा ते कामगुणे भ्रमतु चित्तम् ।
मा लोहगुडं गिल प्रमत्तः मा क्रन्दीः दुःखतिमि दह्यमानः ॥३७१॥

प्रज्ञाहीनस्य न ध्यानं, प्रज्ञा नास्त्यध्यायतः ।
यस्य ध्यानं च प्रज्ञा च, निर्वाणस्य स सन्तिके ॥३७२॥

शून्यागारं प्रविष्टस्य, शान्तचित्तस्य योगिनः ।
अमानुषी रतिर्भवति, धर्मं सम्यग् विपश्यतः ॥३७३॥

यतो यतः सम्मृशति, स्कन्धानामुदयव्ययम् ।
लभते प्रीतिप्रामोद्यममृतं तद् विजानताम् ॥३७४॥

तत्रायमादिभवति, इह प्राज्ञस्य योगिनः ।
इन्द्रियगुप्तिः सन्तुष्टिः, प्रातिमोक्षे च संवरः ॥३७५॥

भज कल्याणमित्राणि, शुद्धाजीवानतन्द्रितान् ।
प्रतिसंस्तारवृत्तिः स्याः आचारकुशलो भवेः ॥
ततः प्रामोद्यबहुलो दुःखस्यान्तं करिष्यसि ॥३७६॥

वर्षिका इव पुष्पाणि, मृदूनि खलु मुञ्चति ।
एवं रागं च द्वेषं च, विप्रमुञ्चत भिक्षवः ॥३७७॥

शान्तवाक् शान्तकायश्च, शान्तचित्तः समाहितः ।
वान्तलोकामिषो भिक्षुः, उपशान्तो हि कथ्यते ॥३७८॥

चोदयेदात्मनात्मानं, विमर्शेदात्मना स्वयम् ।
स्मृतिमान् आत्मगुप्तश्च, सुखेन विहरिष्यति ॥३७९॥

आत्मा हि आत्मनो नाथः, को हि नाथः परो भवेत् ।
तस्मात् संयमयात्मानं, भद्रमश्वं यथा वणिक् ॥३८०॥

प्रामोद्यबहुलो भिक्षुः प्रसन्नो बुद्धशासने ।
अधिगच्छेत् पदं शान्तं संस्कारोपशमं सुखम् ॥३८१॥

यो ह वै दहरो भिक्षुः, युनक्ति बुद्धशासने ।

प्रभासयतीमं लोकम् , अभ्रान्मुक्तो यथा शशी ॥३८२॥

## २६. षड्विंशः ब्राह्मणवर्गः

छिन्धि स्त्रोतः पराक्रम्य, कामान् प्रणुद ब्राह्मण ।
संस्काराणां क्षयं ज्ञात्वा, अकृतज्ञोऽसि ब्राह्मण ॥३८३॥

यदा धर्मद्वये ह्यस्मिन् , विप्रो भवति पारगः ।
अथास्य सर्वे संयोगाः, अस्तं गच्छन्ति जानतः ॥३८४॥

यस्यं पारमपारं वा, पारापारं न विद्यते ।
वीतदरं विसंयुक्तं, ब्राह्मणं तं ब्रवीम्यहम् ॥३८५॥

विरजं ध्यायिनमासीनं, कृतकृत्यमनाश्रवम् ।
उत्तमार्थमनुप्राप्तं, ब्राह्मणं तं ब्रवीम्यहम् ॥३८६॥

दिवा तपति आदित्यः, रात्रिमाभाति चन्द्रमाः ।
क्षत्रियस्तपति सन्नद्धः, ध्यायी तपति ब्राह्मणः
अथ सर्वमहोरात्रं, बुद्धस्तपति तेजसा ॥३८७॥

बाहितपापो ब्राह्मणः, श्रमणः समचर्यया ।
मलं नाशयति स्वस्य, प्रव्रजितः स उच्यते ॥३८८॥

ब्राह्मणं प्रहरेन्नायं, नास्मिन् मुञ्चेद्धि ब्राह्मणः ।
धिग् ब्राह्मणस्य हन्तारं, धिक् तं यं प्रहरिष्यति ॥३८९॥

न ब्राह्मणस्यैतदनल्पश्रेयः, यदा निषेधो मनसा प्रियेभ्यः ।
यतो यतो हिंस्त्रमनो निवर्तते, ततस्ततः शाम्यति दुःखमेतत् ॥३९०॥

यस्य कायेन वाचा च, मनसा नास्ति दुष्कृतम् ।
स्थानत्रयेण संवृतं, ब्राह्मणं तं ब्रवीम्यहम् ॥३९१॥

यस्माद्धर्मं विजानीयात् , सम्यक्सम्बुद्धदेशितम् ।
सत्कृत्य तं नमेन्नित्यमग्निहोत्रं यथा द्विजः ॥३९२॥

न जटाभिर्न गोत्रेण, न वै जात्यास्ति ब्राह्मणः ।
यस्मिन् सत्यं च धर्मश्च, स शुचिः, स च ब्राह्मणः ॥३९३॥

किं ते जटाभिर्दुर्बुद्धे! वल्कलेनाजिनेन किम् !
आभ्यन्तरं ते गहनं, परिमार्जयसि बाह्यत: ॥३९४॥

पांशुकूलधरं जन्तुं, कृशं धमनिश्रन्थतम् ।
एकं वने हि ध्यायन्तं, ब्राह्मणं तं ब्रवीम्यहम् ॥३९५॥

न चाहं ब्राह्मणं वच्मि, योनिजं मातृसम्भवम् ।
स हि भवति भोवादी, स वै अस्ति सकिञ्चन: ॥
अकिञ्चनमनादानं, ब्राह्मणं तं ब्रवीम्यहम् ॥३९६॥

सर्वसंयोजनं छित्त्वां, यो वै न परित्रस्यति ।
सङ्गातिगं विसंयुक्तम् , ब्राह्मणं तं ब्रवीम्यहम् ॥३६७॥

छित्त्वा नध्रीं वरत्रां च, सन्दानं सहनुक्रमम् ।
उत्क्षिप्तपरिघं बुद्धं, ब्राह्मणं तं ब्रवीम्यहम् ॥३९८॥

आक्रोश वधबन्धं च, अद्विष्टो यस्तितिक्षति ।
क्षान्तिबलं बलानीकं, ब्राह्मणं तं ब्रवीम्यहम् ॥३९९॥

अक्रोधनं व्रतवन्तं, शीलवन्तमनुत्सदम् ।
दान्तमन्तिमशरीरं, ब्राह्मणं तं ब्रवीम्यहम् ॥४००॥

जलं यथा पद्मपत्रे, आराग्रे सर्षपो यथा ।
यो न लिम्पति कामेषु, ब्राह्मणं तं ब्रवीम्यहम् ॥४०१॥

यो दु:खस्य प्रजानाति, इहैव क्षयमात्मन: ।
पन्नभारं विसंयुक्तम्, ब्राह्मणं तं ब्रवीम्यहम् ॥४०२॥

मेधाविनं च गम्भीरं, मार्गामार्गस्य कोविदम् ।
उत्तमार्थमनुप्राप्तं, ब्राह्मणं तं ब्रवीम्यहम् ॥४०३॥

असंसृष्टं गृहस्थैर्वा, प्रव्रजितैस्तथोभयै: ।
अनोकसारमल्पेच्छं, ब्राह्मणं तं ब्रवीम्यहम् ॥४०४॥

दण्डं निधाय भूतेषु, त्रसेषु स्थावरेषु च ।

यो न हन्ति न घातयति, ब्राह्मणं तं ब्रवीम्यहम् ॥४०५॥

अविरुद्धं विरुद्धेषु, आत्मदण्डेषु निर्वृतम् ।
सादानेषु अनादानं, ब्राह्मणं तं ब्रवीम्यहम् ।।४०६।।

येन रागश्च द्वेषश्च, मानो म्रक्षश्च पातितः ।
सर्षप इव आराग्रात् , ब्राह्मणं तं ब्रवीम्यहम् ।।४०७।।

अकर्कशां ज्ञापनीं च, गिरं सत्यामुदीरयेत् ।
यथा नाभिष्वजेत् किञ्चित् , ब्राह्मणं तं ब्रवीम्यहम् ।।४०८।।

इह यो दीर्घं ह्रस्वं वा, अणु स्थूलं शुभाशुभम् ।
लोके ह्यदत्तं नादत्ते, ब्राह्मणं तं ब्रवीम्यहम् ।।४०९।।

आशा यस्य न विद्यन्ते, अस्मिन् लोके परत्र च ।
निराशयं विसंयुक्तं, ब्राह्मणं तं ब्रवीम्यहम् ।।४१०।।

यस्यालया न विद्यन्ते, आज्ञाय अकथङ्कथी ।
अगाधममृतं प्राप्तं, ब्राह्मणं तं ब्रवीम्यहम् ।।४११।।

पुण्यं य इह पापं च, उभयोः सङ्गमत्यगात् ।
अशोकं विरजं बुद्धं, ब्राह्मणं तं ब्रवीम्यहम् ।।४१२।।

विमलं चन्द्रवच्छुद्धं, विप्रसन्नमनाविलम् ।
नन्दीभवपरिक्षीणं, ब्राह्मणं तं ब्रवीम्यहम् ।।४१३।।

इमं प्रतिपथं दुर्गं संसारं मोहमत्यगात् ।
तीर्णः पारं गतो ध्यायी अकम्प्यश्चाकथङ्कथी ।
अनुपादाय निर्वृत्तो, ब्राह्मणं तं ब्रवीम्यहम् ।।४१४।।

प्रहाय कामान् यः सर्वान् अनागारः परिव्रजेत् ।
कामभवपरिक्षीणं, ब्राह्मणं तं ब्रवीम्यहम् ।।४१५।।

प्रहाय तृष्णा यः सर्वाः, अनागारः परिव्रजेत् ।
तृष्णाभवपरिक्षीणं, ब्राह्मणं तं ब्रवीम्यहम् ।।
प्रहाय तृष्णा यः सर्वाः, अनागारः परिव्रजेत् ।
तृष्णाभवपरिक्षीणं, ब्राह्मणं तं ब्रवीम्यहम् ।।४१६।।

हित्त्वा मानुषकं योगं दिव्यं योगमुपात्यगात् ।
सर्वयोगविसंयुक्तं, ब्राह्मणं तं ब्रवीम्यहम् ।।४१७।।

हित्त्वा रत्यरती चोभे, शीतीभूतं निरुपधिम् ।
सर्वलोकाभिभूं वीरं, ब्राह्मणं तं ब्रवीम्यहम् ।।४१८।।

च्युतिं यो वेद सत्त्वानामुत्पत्तिं चैव सर्वशः ।
असक्तं सुगतं बुद्धं, ब्राह्मणं तं ब्रवीम्यहम् ।।४१९।।

गतिं यस्य न जानन्ति, देव-गन्धर्व-मानवाः ।
क्षीणाश्रवं च अर्हन्तं, ब्राह्मणं तं ब्रवीम्यहम् ।।४२०।

पुरो यस्य च पश्चाच्च, मध्ये नास्ति च किञ्चन ।
अकिञ्चनमनादानं, ब्राह्मणं तं ब्रवीम्यहम् ।।४२१।।

ऋषभं प्रवरं वीरं, महर्षिं जयकारकम् ।
अनेजं स्नातकं बुद्धं, ब्राह्मणं तं ब्रवीम्यहम् ।।४२२।।

पूर्वनिवासं यो वेद, स्वर्गापायं च पश्यति ।
अथ जातिक्षयं प्राप्तो ऽ भिज्ञाव्यवसितो मुनिः ।
सर्वव्यवसितान्तो यो, ब्राह्मणं तं ब्रवीम्यहम् ।।४२३।।

।। संस्कृतधम्मपदं सम्पूर्णम् ।।



# सांख्यदर्शनम्

**ईश्वरकृष्णविरचिता**

## साङ्ख्यकारिका

दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ ।
दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥
दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥
मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरूषः ॥ ३ ॥
दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥
प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥
सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥
अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च ॥ ७ ॥
सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्कार्यतस्तदुपलब्धेः ।
महदादि तच्च कार्यं प्रकृतिसरूपं विरूपञ्च ॥ ८ ॥
असदकरणादुपादानग्रहणात् सर्वसम्भवाभवात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥
हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥
त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥
प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योऽन्याभिभावाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥
सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः ।

गरु वरणकमेव तमः, प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥

अविवेक्यादेः सिद्धस्त्रैगुण्यात्तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम् ॥ १४ ॥
भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद् वैश्वरूपस्य ॥ १५ ॥
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।
परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥
सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥
जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥
तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥
तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ २० ॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥
प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥
अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥
अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्तते सर्गः ।
एकादशकश्च गणस्तन्मात्रपञ्चकस्चैव ॥ २४ ॥
सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥ २५ ॥
बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।
वावपाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः ॥ २६ ॥
उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियञ्च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥
रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।

वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥

स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥
युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥
स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरूषार्थ एव हेतुर्न केनचित् कार्यते करणम् ॥ ३१ ॥
करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।
कार्यं च तस्य दशधा हार्यं धार्यं प्रकाश्यञ्च ॥ ३२ ॥
अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥
बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।
वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥ ३४ ॥
सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥
एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥
सर्वं प्रत्युभोगं यस्मात् पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥
तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ।
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥
सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥
पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥
चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथाच्छाया ।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥
पुरुषार्थहेतुकमिदं निमित्तनैमित्तकप्रङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद् व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥
सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।

दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥

धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ।। ४४ ।।
वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात् तद्विपर्यासः ।। ४५ ।।
एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात् तस्य भेदास्तु पञ्चाशत् ।। ४६ ।।
पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ।। ४७ ।।
भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ।। ४८ ।।
एकादशेन्द्रियबधाः सह बुद्धिबधैरशक्तिरुद्दिष्टा ।
सप्तदश बधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ।। ४९ ।।
आध्यात्मिक्यश्चतस्त्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः ।। ५० ।।
ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ।। ५१ ।।
न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ।। ५२ ।।
अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ।। ५३ ।।
ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ।। ५४ ।।
तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।
लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं स्वभावेन ।। ५५ ।।
इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ।। ५६ ।।
वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ।। ५७ ।।
औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।

पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ।। ५८ ।।

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥
नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥ ६० ॥
प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥
तस्मान्न बध्यतेऽद्धा न मुच्यते नाऽपि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥
रूपैः सप्तभिरेव तु बध्नात्यामानमात्मना प्रकृतिः ।
सैव च पुरुषार्थम्प्रति विमोचयत्येकरूपेण ॥ ६३ ॥
एवं तत्त्वाभ्यासान्नास्मि न मे नाऽहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥
तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः ॥ ६५ ॥
दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥
सम्यग्ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशात् चक्रभ्रमिवद् धृतशरीरः ॥ ६७ ॥
प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥
पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते तत्र भूतानाम् ॥ ६९ ॥
एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ॥ ७० ॥
शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥

**इति सांख्यकारिका समाप्ता**





# योगदर्शनम्

## पातञ्जल-योगसूत्राणि

### पतञ्जलि-महर्षेः ध्यानम् ( प्रार्थनाश्लोकः )

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥

### अथ प्रथमः समाधिपादः ( सूत्रसंख्या 51 )

सूत्रम् 1.1. अथ योगानुशासनम्
सूत्रम् 1.2. योगः चित्तवृत्तिनिरोधः
सूत्रम् 1.3. तदा द्रष्टुः स्वरूपेऽवस्थानम्
सूत्रम् 1.4. वृत्तिसारूप्यमितरत्र
सूत्रम् 1.5. वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः
सूत्रम् 1.6. प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः
सूत्रम् 1.7. प्रत्यक्षानुमानागमाः प्रमाणानि
सूत्रम् 1.8. विपर्ययो मिथ्याज्ञार्न्हेम् अतद्रूपप्रतिष्ठम्
सूत्रम् 1.9 शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः
सूत्रम् 1.10. अभावप्रत्ययालम्बना वृत्तिः निद्रा
सूत्रम् 1.11. अनुभूतविषयासम्प्रमोषः स्मृतिः
सूत्रम् 1.12. अभ्यासवैराग्याभ्यां तन्निरोधः
सूत्रम् 1.13. तत्र स्थितौ यत्नः अभ्यासः
सूत्रम् 1.14. स तु दीर्घकाल-नैरन्तर्य-सत्कारासेवितो दृढभूमिः
सूत्रम् 1.15. दृष्टानुश्रविक-विषय-वितृष्णस्य वशीकारसंज्ञा वैराग्यम्
सूत्रम् 1.16 तत्परं पुरुषख्यातेः गुणवैतृष्ण्यम्

सूत्रम् 1.17. वितर्क-विचार-आनन्द-अस्मिता-रूपानुगमात् संप्रज्ञातः

सूत्रम् 1.18. विरामप्रत्ययाभ्यासपूर्वःसंस्कारशेषोऽ अन्यः

सूत्रम् 1.19. भवप्रत्ययो विदेहप्रकृतिलयानाम्

सूत्रम् 1.20. श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञापूर्वक इतरेषाम्

सूत्रम् 1.21. तीव्रसंवेगानाम् आसन्नः

सूत्रम् 1.22. मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः

सूत्रम् 1.23. ईश्वरप्रणिधानाद् वा

सूत्रम् 1.24. क्लेश-कर्म-विपाक-आशयैः अपरामृष्टः पुरुषविशेषः ईश्वरः

सूत्रम् 1.25. तत्र निरतिशयं सर्वज्ञबीजम्

सूत्रम् 1.26 स पूर्वेषामपि गुरुः कालेन अनवच्छेदात्

सूत्रम् 1.27. तस्य वाचकः प्रणवः

सूत्रम् 1.28. तज्जपः तदर्थभावनम्

सूत्रम् 1.29 ततः प्रत्यक्चेतनाधिगमः अपि अन्तरायाभावश्च

सूत्रम् 1.30. व्याधि-स्त्यान-संशय-प्रमाद-आलस्य-अविरति-भ्रान्तिदर्शन-अलब्धभूमिकत्व-अनवस्थितत्वानि चित्तविक्षेपाः ते अन्तरायाः

सूत्रम् 1.31. दुःख-दौर्मनस्य-अङ्गमेजयत्व-श्वास-प्रश्वासाः विक्षेपसहभुवः

सूत्रम् 1.32. तत्प्रतिषेधार्थम् एकतत्त्वाभ्यासः

सूत्रम् 1.33. मैत्री-करुणा-मुदित-उपेक्षाणां सुख-दुःख-पुण्य-अपुण्य-विषयाणां भावनातः चित्तप्रसादनम्

सूत्रम् 1.34 प्रच्छर्दन-विधारणाभ्यां प्राणस्य

सूत्रम् 1.35. विषयवती वा प्रवृत्तिः उत्पन्ना मनसः स्थितिनिबन्धिनी

सूत्रम् 1.36. विशोका वा ज्योतिष्मती

सूत्रम् 1.37. वीतरागविषयम् वा चित्तम्

सूत्रम् 1.38 स्वप्ननिद्राज्ञानालम्बनं वा

सूत्रम् 1.39. यथाभिमतध्यानात् वा

सूत्रम् 1.40. परमाणु-परममहत्त्वान्तः अस्य वशीकारः

सूत्रम् 1.41. क्षीणवृत्तेरभिजातस्येव मणेः ग्रहीतृ-ग्रहण-ग्राह्येषु तत्स्थ-तदञ्जनता समापत्तिः

सूत्रम् 1.42. तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः

सूत्रम् 1.43. स्मृतिपरिशुद्धौ स्वरूपशून्येव अर्थमात्रनिर्भासा निर्वितर्का

सूत्रम् 1.44. एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता

सूत्रम् 1.45. सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्

सूत्रम् 1.46. ता एव सबीजः समाधिः

सूत्रम् 1.47. निर्विचारवैशारद्ये अध्यात्मप्रसादः

सूत्रम् 1.48. ऋतम्भरा तत्र प्रज्ञा

सूत्रम् 1.49. श्रुतानुमान-प्रज्ञाभ्याम् अन्य-विषया विशेषार्थत्वात्

सूत्रम् 1.50 तज्जः संस्कारः अन्य-संस्कार-प्रतिबन्धी

सूत्रम् 1.51. तस्यापि निरोधे सर्व निरोधात् निर्बीजः समाधिः

इति प्रथमः समाधिपादः

---

## 2

## अथ द्वितीयः साधनपादः ( सूत्रसंख्या 55 )

सूत्रम् 2.1. तपः-स्वाध्याय - ईश्वरप्रणिधानानि क्रियायोगः

सूत्रम् 2.2. समाधिभावनार्थः क्लेशतनूकरणार्थश्च

सूत्रम् 2.3. अविद्या-अस्मिता-राग-द्वेष-अभिनिवेशाः क्लेशाः

सूत्रम् 2.4. अविद्या क्षेत्रमुत्तरेषां प्रसुप्त- तनु- विच्छिन्न- उदाराणाम्

सूत्रम् 2.5. अनित्य-अशुचि-दुःख-अनात्मसु नित्य-शुचि-सुख-आत्मख्यातिः अविद्या

सूत्रम् 2.6. दृग्दर्शनशक्तयोः एकात्मता एव अस्मिता

सूत्रम् 2.7. सुखानुशयी रागः

सूत्रम् 2.8. दुःखानुशयी द्वेषः

सूत्रम् 2.9. स्वरसवाही विदुषोऽपि तथारूढः अभिनिवेशः

सूत्रम् 2.10. ते प्रतिप्रसवहेयाः सूक्ष्माः

सूत्रम् 2.11. ध्यानहेयाः तद्वृत्तयः

सूत्रम् 2.12. क्लेशमूलः कर्माशयः दृष्ट-अदृष्ट-जन्मवेदनीयः

सूत्रम् 2.13. सति मूले तद्विपाकः जात्यायुर्भोगाः

सूत्रम् 2.14. ते ह्लाद-परितापफलाः पुण्यापुण्यहेतुत्वात्

सूत्रम् 2.15. परिणाम-ताप-संस्कार-दुःखैः गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः

सूत्रम् 2.16. हेयं दुःखम् अनागतम्

सूत्रम् 2.17. द्रष्टृ-दृश्ययोः संयोगः हेयहेतुः

सूत्रम् 2.18. प्रकाश-क्रिया-स्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्

सूत्रम् 2.19. विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि

सूत्रम् 2.20. द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः

सूत्रम् 2.21. तदर्थ एव दृश्यस्यऽऽत्मा

सूत्रम् 2.22. कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्

सूत्रम् 2.23. स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः

सूत्रम् 2.24. तस्य हेतुरविद्या

सूत्रम् 2.25. तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यम्

सूत्रम् 2.26. विवेकख्यातिरविप्लवा हानोपायः



सूत्रम् 2.27. तस्य सप्तधा प्रान्तभूमिः प्रज्ञा

सूत्रम् 2.28. योगाङ्गानुष्ठानात् अशुद्धिक्षये ज्ञानदीप्तिरा - विवेकख्यातेः

सूत्रम् 2.29. यम-नियमासनप्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि

सूत्रम् 2.30. अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः

सूत्रम् 2.31. जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्

सूत्रम् 2.32. शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः

सूत्रम् 2.33. वितर्कबाधने प्रतिपक्षभावनम्

सूत्रम् 2.34. वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्

सूत्रम् 2.35. अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः

सूत्रम् 2.36. सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्

सूत्रम् 2.37. अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्

सूत्रम् 2.38. ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः

सूत्रम् 2.39. अपरिग्रहस्थैर्ये जन्मकथन्तासंबोधः

सूत्रम् 2.40. शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः

सूत्रम् 2.41. सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-योग्यत्वानि व

सूत्रम् 2.42. संतोषात् अनुत्तमः सुखलाभः

सूत्रम् 2.43. कायेन्द्रियसिद्धिरशुद्धिक्षयात् तपसः

सूत्रम् 2.44. स्वाध्यात् इष्टदेवतासंप्रयोगः

सूत्रम् 2.45. समाधिसिद्धिरीश्वरप्रणिधानात्

सूत्रम् 2.46. स्थिरसुखमासनम्

सूत्रम् 2.47. प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्

सूत्रम् 2.48. ततो द्वन्द्वानभिघातः



सूत्रम् 2.49. तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः

सूत्रम् 2.50. बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः

सूत्रम् 2.51. बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः

सूत्रम् 2.52. ततः क्षीयते प्रकाशावरणम्

सूत्रम् 2.53. धारणासु च योग्यता मनसः

सूत्रम् 2.54. स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रात्याहारः

सूत्रम् 2.55. ततः परमा वश्यतेन्द्रियाणाम्

इति द्वितीयः साधनपादः

---

## 3

## अथ तृतीयः विभूतिपादः ( सूत्रसंख्या-55 )

सूत्रम् 3.1. देशबन्धश्चित्तस्य धारणा

सूत्रम् 3.2. तत्र प्रत्ययैकतानता ध्यानम्

सूत्रम् 3.3. तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः

सूत्रम् 3.4. त्रयमेकत्र संयमः

सूत्रम् 3.5. तज्जयात् प्रज्ञालोकः

सूत्रम् 3.6. तस्य भुमिषु विनियोगः

सूत्रम् 3.7. त्रयमन्तरङ्गं पूर्वेभ्यः

सूत्रम् 3.8. तदपि बहिरङ्गं निर्बीजस्य

सूत्रम् 3.9. व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः

सूत्रम् 3.10. तस्य प्रशान्तवाहिता संस्कारात्

सूत्रम् 3.11. सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः

सूत्रम् 3.12. ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता-परिणामः

सूत्रम् 3.13. एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः

सूत्रम् 3.14. शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी

सूत्रम् 3.15. क्रमान्यत्वं परिणामान्यत्वे हेतुः

सूत्रम् 3.16. परिणामत्रयसंयमात् अतितानागतज्ञानम्

सूत्रम् 3.17. शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्वभूतरूतज्ञानम्

सूत्रम् 3.18. संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्

सूत्रम् 3.19. प्रत्ययस्य परचित्तज्ञानम्

सूत्रम् 3.20. न च तत्सालम्बनं तस्याविषयीभूतत्वात्

सूत्रम् 3.21. कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासंप्रयोगेऽन्तर्धानम्

सूत्रम् 3.22. सोपक्रमं निरूपक्रमं च कर्म तत्संयमात् अपरान्तज्ञानमरिष्टेभ्यो वा

सूत्रम् 3.23. मैत्र्यादिषु बलानि

सूत्रम् 3.24. बलेषु हस्तिबलादीनि

सूत्रम् 3.25. प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्

सूत्रम् 3.26. भुवनज्ञानं सूर्ये संयमात्

सूत्रम् 3.27. चन्द्रे ताराव्यूहज्ञानम्

सूत्रम् 3.28. ध्रुवे तद्गतिज्ञानम्

सूत्रम् 3.29. नाभिचक्रे कायव्यूहज्ञानम्

सूत्रम् 3.30. कण्ठकूपे क्षुत्पिपासानिवृत्तिः

सूत्रम् 3.31. कूर्मनाड्यां स्थैर्यम्

सूत्रम् 3.32. मूर्धज्योतिषि सिद्धदर्शनम्

सूत्रम् 3.33. प्रातिभाद्वा सर्वम्

सूत्रम् 3.34 हृदये चित्तसंवित्

सूत्रम् 3.35. सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः

परार्थात् स्वार्थसंयमात् पुरुषज्ञानम्

सूत्रम् 3.36. ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते

सूत्रम् 3.37. ते समाधावुपसर्गा व्युत्थाने सिद्धयः

सूत्रम् 3.38. बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः

सूत्रम् 3.39. उदानजयात् जल-पङ्क-कण्टकादिष्वसङ्ग उत्क्रान्तिश्च

सूत्रम् 3.40. समानजयाज्ज्वलनम्

सूत्रम् 3.41. श्रोत्राकाशयोः संबन्धसंयमाद् दिव्यं श्रोत्रम्

सूत्रम् 3.42. कायाकाशयोः संबन्धसंयमात् लघुतूलसमापत्तेश्च आकाशगमनम्

सूत्रम् 3.43. बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः

सूत्रम् 3.44. स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः

सूत्रम् 3.45. ततोऽणिमादिप्रादुर्भावः कायसंपत् तद्धर्मानभिघातश्च

सूत्रम् 3.46. रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्

सूत्रम् 3.47. ग्रहणस्वरूपास्मितान्वयार्थत्त्वसंयमाद् इन्द्रियजयः

सूत्रम् 3.48. ततो मनोजवित्वं विकरणभावः प्रधानजयश्च

सूत्रम् 3.49. सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च

सूत्रम् 3.50. तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्

सूत्रम् 3.51. स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्

सूत्रम् 3.52. क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम्

सूत्रम् 3.53. जातिलक्षणदेशैरन्यतानवच्छेदात् तुल्ययोस्ततः प्रतिपत्तिः

सूत्रम् 3.54. तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम्

सूत्रम् 3.55. सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति



इति तृतीयः विभूतिपादः ।

---

## 4

## अथ चतुर्थः कैवल्यपादः

सूत्रम् 4.1. जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः

सूत्रम् 4.2. जात्यन्तरपरिणामः प्रकृत्यापूरात्

सूत्रम् 4.3. निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्

सूत्रम् 4.4. निर्माणचित्तानि अस्मितामात्रात्

सूत्रम् 4.5. प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्

सूत्रम् 4.6. तत्र ध्यानजमनाशयम्

सूत्रम् 4.7. कर्माशुक्लाकृष्णं योगिनः त्रिविधमितरेषाम्

सूत्रम् 4.8 ततस्तद्विपाकानुगुणानाम् एवाभिव्यक्तिर्वासनानाम्

सूत्रम् 4.9 जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्

सूत्रम् 4.10 तासामनादित्वं चा शिषो नित्यत्वात्

सूत्रम् 4.11 हेतुफलाश्रयालम्बनैः संगृहीतत्त्वात् एषामभावे तदभावः

सूत्रम् 4.12. अतीतानागतं स्वरूपतोऽस्ति अध्वभेदात् धर्माणाम्

सूत्रम् 4.13. ते व्यक्तसूक्ष्मा गुणात्मानः

सूत्रम् 4.14. परिणामैकत्वाद् वस्तुतत्त्वम्

सूत्रम् 4.15 वस्तुसाम्ये चित्तभेदात् तयोर्विभक्तः पन्थाः

सूत्रम् 4.16. न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात्

सूत्रम् 4.17 तदुपरागापेक्षित्वात् चित्तस्य वस्तु ज्ञाताज्ञातम्

सूत्रम् 4.18 सदा ज्ञाताश्चित्तवृत्तयः तत्प्रभोः पुरुषस्यापरिणामित्वात्

सूत्रम् 4.19. न तत्स्वाभासं दृश्यत्वात् ॥19॥

सूत्रम् 4.20. एकसमये चोभयानवधारणम् ॥20॥

सूत्रम् 4.21. चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च

सूत्रम् 4.22. चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्

सूत्रम् 4.23 द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्

सूत्रम् 4.24 तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात्

सूत्रम् 4.25 विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः

सूत्रम् 4.26. तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्

सूत्रम् 4.27 तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः

सूत्रम् 4.28. हानमेषां क्लेशवदुक्तम्

सूत्रम् 4.29 प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः

सूत्रम् 4.30. ततः क्लेशकर्मनिवृत्तिः

सूत्रम् 4.31. तदा सर्वावरणमलापेतस्य ज्ञानस्य आनन्त्यात् ज्ञेयमल्पम्

सूत्रम् 4.32. ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्

सूत्रम् 4.33. क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः

सूत्रम् 4.34. पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ।

इति चतुर्थः पादः ।

समाप्तोऽयं श्रीमत्पतञ्जलिप्रणीतो योगसूत्रपाठः



# वैशेषिकदर्शनम्

**श्रीमदन्नम्भट्टविरचितः**

## तर्कसङ्ग्रहः

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ।।

- द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः सप्त पदार्थाः ।
- तत्र द्रव्याणि-पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ।।
- रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वाऽपरत्व-गुरुत्व-द्रवत्व-स्नेह-शब्द-बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माऽधर्म-संस्काराश्चतुर्विंशतिर्गुणाः ।।
- उत्क्षेपणा-ऽपक्षेपणा-ऽकुञ्चन-प्रसारण-गमनानि पञ्च कर्माणि ।।
- परमपरं चेति द्विविधं सामान्यम् ।।
- नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।।
- समवायस्त्वेक एव ।।
- अभावश्चतुर्विधः- प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति।।
- तत्र गन्धवती पृथिवी । सा द्विविधा-नित्याऽनित्या च । नित्या-परमाणुरूपा, अनित्या-कार्यरूपा । (१) पुनस्त्रिविधा-शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ।।
- शीतस्पर्शवत्य आपः । ता द्विविधाः-नित्याः,अनित्याश्च । नित्याः-परमाणुरूपाः । अनित्याः-कार्यरूपाः । पुनस्त्रिविधाः-शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः-सरित्समुद्रादिः ।।
- उष्णस्पर्शवत्तेजः । तच्च द्विविधम्–नित्यम् ,अनित्यञ्च । नित्यं-परमाणुरूपम् । अनित्यं-कार्यरूपम् । पुनस्त्रिविधं-शरीरेन्द्रियविषयभेदात्

। शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चतुर्विधः- भौमदिव्यौदर्याकरजभेदात् । भौमं-वह्न्यादिकम् । अबिन्धनं-दिव्यं विद्युदादि । भुक्तस्य परिमाणहेतुरौदर्यम् । आकरजं सुवर्णादि॥

- रूपरहितः स्पर्शवान् वायुः । स द्विविधः-नित्योऽनित्यश्च । नित्यः-परमाणुरूपः । अनित्यः-कार्यरूपः । पुनस्त्रिविधः-शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीरान्तःसंचारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणाऽपानादिसंज्ञां लभते ॥
- शब्दगुणकम्-आकाशम् । तच्चैकं विभु नित्यं च ॥
- अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ॥
- प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका विभ्वी नित्या च ॥
- ज्ञानादिकरणमात्मा । स द्विविधः-परमात्मा जीवात्मा चेति । तत्रेश्वरः सर्वज्ञः परमात्मैक एव । जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च ॥
- सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च ॥
- चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्ल-नील-पीत-रक्त-हरित-कपिश-चित्र-भेदात् सप्तविधम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ।
- रसनाग्राह्यो गुणो रसः। स च मधुराऽम्ल-लवण-कटु-कषाय-तिक्तभेदात् षड्विधः। पृथिवीजलवृत्तिः। तत्र पृथिव्यां षड्विधः। जले मधुर एव॥
- घ्राणग्राह्यो गुणो गन्धः । स च द्विविधः-सुरभिरसुरभिश्च । पृथिवीमात्रवृत्तिः ॥
- त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स च त्रिविधः-शीतोष्णा-ऽनुष्णाऽशीतभेदात् । पृथिवीजलतेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवी-वाय्वोः॥

- रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च । अन्यत्राऽपाकजं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ॥
- एकत्वादिव्यवहारहेतुः संख्या सा नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्राऽनित्यमेव॥
- मानव्यवहाराऽसाधारणं कारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम् अणु, महद् दीर्घं, ह्रस्वं, चेति ॥
- पृथग्व्यवहारासाधारणं कारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ।
- संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ॥
- संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ॥
- पराऽपर-व्यवहाराऽसाधारणकारणे परत्वाऽपरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी । ते द्विविधे-दिक्कृते कालकृते च । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ॥
- आद्यपतनाऽसमवायिकारणं गुरुत्वं । पृथिवीजलवृत्ति ॥
- आद्यस्यन्दनाऽसमवायिकारणं द्रवत्वम् । पृथिवीजलतेजोवृत्ति । तद् द्विविधम् –सांसिद्धिकं नैमित्तिकं चेति । सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ॥
- चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ॥
- श्रोत्रग्राह्यो गुणः शब्दः । आकाशमात्रवृत्तिः । स द्विविधो-ध्वन्यात्मको वर्णात्मकश्चेति । तत्र ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ॥
- सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विविधा-स्मृतिरनुभवश्च ॥
- तद्भिन्नं ज्ञानमनुभवः । स द्विविधः-यथार्थोऽयथार्थश्चेति ॥
- तद्वति तत्प्रकारकोऽनुभवो यथार्थः । यथा 'अयं घट' इति ज्ञानम् । सैव प्रमेत्युच्यते ॥

- तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः । यथा शुक्तौ इदं रजतम् इति ज्ञानम् । सैवाऽप्रमेत्युच्यते ॥
- यथार्थानुभवश्चतुर्विधः-प्रत्यक्षाऽनुमित्युपमितिशाब्दभेदात् ॥
- तत्करणमपि चतुर्विधं– प्रत्यक्षाऽनुमानोपमानशब्दभेदात् ॥
- असाधारणं कारणं करणम् ॥
- कार्यनियतपूर्ववृत्ति कारणम् ॥
- कार्यं प्रागभावप्रतियोगि ॥
- कारणं त्रिविधं-समवाय्यसमवायिनिमित्तभेदात् ॥
- यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा तन्तवः पटस्य,पटश्च स्वगतरूपादेः ॥
- कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणम् । यथा तन्तु संयोगः पटस्य । तन्तुरूपं पटरूपस्य ॥
- तदुभयभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य ॥
- तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥
- तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥
- इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । ( ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् ) तद् द्विविधम् – निर्विकल्पकं सविकल्पकं चेति ॥
- तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ॥
- सप्रकारकं ज्ञानं सविकल्पकम् , यथा 'डित्थोऽयं' 'ब्राह्मणोऽयं' 'श्यामोऽय' मिति ॥
- प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः- संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति ॥
- चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः ॥
- घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः । चक्षुःसंयुक्ते घटे रूपस्य समवायात् ॥

- रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः । चक्षुःसयुक्ते घटे रूपं समवेतम्, तत्र रूपत्वस्य समवायात् ॥
- श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः । कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात् , शब्दस्याऽऽकाशगुणत्वात् , गुणगुणिनोश्च समवायात् ॥
- शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ॥
- अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः । 'घटाभाववद्भूतल'मित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ॥
- एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम् , तत्करणमिन्द्रियम् , तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ॥ प्रत्यक्षं व्याख्यातम् ॥

## अथाऽनुमानपरिच्छेदः

- अनुमितिकरणम् अनुमानम् ॥
- परामर्शजन्यं ज्ञानम् अनुमितिः ॥
- व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा 'वह्निव्याप्यधूमवानयं पर्वत' इति ज्ञानं परामर्शः । तज्जन्यं 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिः॥
- यत्र यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमो व्याप्तिः ॥
- व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ॥
- अनुमानं द्विविधं स्वार्थं परार्थञ्च ॥
- स्वार्थं स्वानुमितिहेतुः । तथा हि स्वयमेव भूयो दर्शनेन यत्र यत्र धूमस्तत्र तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाऽग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति,-'यत्र यत्र धूमः तत्र तत्राग्निः, इति, तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात् 'पर्वतो वह्निमानि'ति ज्ञानमनुमितिरुत्पद्यते तदेतत् स्वार्थानुमानम् ॥

- यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुज्यते, तत्परार्थानुमानम् । यथा-पर्वतो वह्निमान् -१ । धूमवत्त्वात् -२ । यो यो धूमवान् स स वह्निमान् , यथा महानसम् –३ । तथा चायम् -४ । तस्मात्तथा -५ इति । अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते ॥

- प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः ।'पर्वतो वह्निमानि,ति-प्रतिज्ञा । 'धूमवत्त्वादि,ति हेतुः । ' यो यो धूमवान् स स वह्निमानि'त्युदाहरणम् । 'तथा चायमि'त्युपनयः । 'तस्मात्तथे'ति निगमनम॥

- स्वार्थाऽनुमिति-परार्थाऽनुमित्योर्लिङ्गपरामर्श एव करणम् । तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥

- लिङ्गं त्रिविधम् –अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि, चेति । अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि, यथा - वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निर्यथा-महानसमित्यन्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा-महाह्रद इति व्यतिरेकव्याप्तिः॥

- अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा 'घटोऽभिधेयः-प्रमेयत्वात् पटवत् '। अत्र प्रमेयत्वाऽभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च ॥

- व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा-पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् । यदितरेभ्यो न भिद्यते न तद् गन्धवद् यथा जलम् , न चेयं तथा, तस्मान्न तथेति, अत्र यद् गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात् ॥

- सन्धिग्धसाध्यवान् पक्षः । यथा धूमवत्त्वे हेतौ पर्वतः ॥

- निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम् ॥

- निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव महाह्रदः ॥

- सव्यभिचार-विरूद्ध-सत्प्रतिपक्षा-ऽसिद्ध बाधिताः पञ्च हेत्वाभासाः ॥

- सव्यभिचारोऽनैकान्तिकः । स त्रिविधः-साधरणा-ऽसाधारणा-ऽनुपसंहारिभेदात् ॥

- तत्र साध्याभाववद् वृत्तिः साधारणोऽनैकान्तिकः । यथा-पर्वतो-वह्निमान् प्रमेयत्वादिति । प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात् ।।
- सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा-'शब्दो-नित्यः-शब्दत्वादिति । शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति ।।
- अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा-सर्वम् अनित्यं प्रमेयत्वादिति। अत्र सर्वस्यापि पक्षत्वाद् दृष्टान्तो नास्ति ।।
- साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा- शब्दो नित्यः कृतकत्वादिति। कृतकत्वं हि नित्यत्वाऽभावेनाऽनित्यत्वेन व्याप्तम् ।।
- यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः यथा-शब्दो-नित्यः श्रावणत्वाच्छब्दत्ववत् । शब्दो-ऽनित्यः कार्यत्वाद् घटवदिति।।
- असिद्धस्त्रिविधः, आश्रयासिद्धः, स्वरूपासिद्धो, व्याप्यत्वासिद्धश्चेति।।
- आश्रयासिद्धो यथा 'गगनारविन्दं-सुरभि, अरविन्दत्वात् , सरोजाऽरविन्दवदिति । अत्र गगनारविन्दमाश्रयः, स च नास्त्येव ।।
- स्वरूपासिद्धो यथा- शब्दोऽनित्यश्चाक्षुषत्वात्, रूपवदिति । अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात् ।।
- सोपाधिको हेतुर्व्याप्यत्वाऽसिद्धः । साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधिः । साध्यसमानाधिकरणाऽत्यन्ताभावाऽप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठाऽत्यन्ताऽभावप्रतियोगित्वं साधनाऽव्यापकत्वम् । यथा- पर्वतो धूमवान् वह्निमत्वाद् इत्यत्राऽऽद्रेन्धसंयोग उपाधिः । तथाहि-'यत्र धूमस्तत्राऽऽर्द्रेन्धनसंयोगः' इति साध्यव्यापकत्वम् , 'यत्र वह्निस्तत्राऽऽर्द्रेन्धनसंयोगो नास्ति' अयोगोलक आर्द्रेन्धनसंयोगाऽभावादिति साधनाऽव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाऽव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वाऽसिद्धम् ।।
- यस्य साध्याभावः प्रमाणान्तरेण पक्षे निश्चितः सः बाधितः । यथा वह्निरनुष्णो द्रव्यत्वादिति। अत्राऽनुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम् ।। व्याख्यातमनुमानम् ।।

## अथोपमानपरिच्छेदः

- उपमितिकरणम् उपमानम् । संज्ञा-संज्ञि-सम्बन्धज्ञानमुपमितिः, तत्करणं सादृश्यज्ञानम् । अतिदेशवाक्यार्थस्मरणं अवान्तरव्यापारः । तथा हि कश्चिद् गवयशब्दवाच्य (पदार्थ) मजानन् कुतश्चिदारण्यकपुरुषाद् 'गोसदृशो गवय ' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति, तदनन्तरम् 'अयं गवयशब्दवाच्य' इत्युपमितिरुत्पद्यते ॥ इत्युपमानम् ॥

## अथशब्दपरिच्छेदः

- आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं पदसमूहः यथा 'गामानय शुक्लां दण्डेने'ति ॥ शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः ॥
- आकांक्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः । पदस्य पदान्तरव्यतिरेकप्रयुक्ताऽन्वयाऽननुभावकत्वम् आकांक्षा । अर्थाऽबाधो योग्यता । पदानामविलम्बेनोच्चारणं सन्निधिः । तथा च आकांक्षादिरहितं वाक्यमप्रमाणम् । यथा- गौरश्वः पुरूषो हस्ती'ति न प्रमाणम् , आकांक्षाविरहात् । 'वह्निना सिञ्चेदि'ति न प्रमाणम् , योग्यताविरहात। प्रहरे प्रहरेऽसहोच्चारितानि 'गामानये'त्यादिपदानि न प्रमाणम् , सान्निध्याभावात् ॥
- वाक्यं द्विविधम् – वैदिकं, लौकिकं च । वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम् , अन्यदप्रमाणम् ॥ वाक्यार्थज्ञानं शाब्दज्ञानं, तत्करणं शब्दः, ॥

## अथावशिष्टगुणादिनिरूपणम्

- अयथार्थाऽनुभवस्त्रिविधः संशय-विपर्यय-तर्कभेदात् ॥
- एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानं संशयः । यथा स्थाणुर्वा पुरुषो वेति ॥
- मिथ्याज्ञानं विपर्ययः । यथा शुक्तौ इदं रजतमिति ॥

- व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा-यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति ॥
- स्मृतिरपि द्विविधा- यथार्थाऽयथार्था चेति । प्रमाजन्या यथार्था, अप्रमाजन्या अयथार्था ॥
- सर्वेषामनुकूलतया वेदनीयं सुखम् ॥
- सर्वेषां प्रतिकूलतया वेदनीयं दुःखम् ॥
- इच्छा कामः। क्रोधो द्वेषः। कृतिः प्रयत्नः॥
- विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्योऽधर्मः ॥
- बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च। नित्या ईश्वरस्य अनित्या जीवस्य ॥
- संस्कारस्त्रिविधः वेगो, भावना, स्थितिस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनो मात्रवृत्तिः । अनुभवजन्या स्मृतिर्हेतुर्भावना, आत्ममात्रवृत्तिः । अन्यथाकृतस्य पुनस्तदवस्थाऽऽपादकः स्थितिस्थापकः, कटादिपृथिवीवृत्तिः ॥ इति गुणाः॥
- चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम् । शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् ॥
- नित्यमेकमनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । तद् द्विविधं पराऽपरभेदात् । परं सत्ता अपरं द्रव्यत्वादि ॥
- नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ॥
- नित्यसम्बन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्द्वयोर्मध्ये एकमविनश्यत् तदवस्थमपरा- ऽऽश्रितमेवाऽवतिष्ठते तावयुतसिद्धौ । यथा अवयवाऽवयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति ॥
- अनादिः सान्तः प्रागभावः । उत्पद्यते पूर्वं कार्यस्य ॥
- सादिरनन्तः प्रध्वंसः । उत्पत्त्यनन्तरं कार्यस्य ॥

- त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः । यथा भूतले घटो नास्तीति ॥
- तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः । यथा घटः पटो नेति ॥
- सर्वेषामपि पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम॥

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।**
**अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः॥**

**॥ इति श्रीमदन्नम्भट्टकृतस्तर्कसंग्रहः ॥**



# न्यायदर्शनम्

## श्रीभासर्वज्ञप्रणीतः

## न्यायसारः

**प्रणम्य शम्भुं जगतः पतिं परम्**
**समस्ततत्वार्थविदं स्वभावतः।**
**शिशुप्रबोधाय मयाऽभिधास्यते**
**प्रमाणतद्भेदतदन्यलक्षणम्।।**

सम्यगनुभवसाधनं प्रमाणम्। सम्यग्ग्रहणं संशयविपर्ययापोहार्थम्। तत्राऽनवाधरणं ज्ञानं संशयः। स च समानधर्माऽनेकधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिकारणभेदात्पंचधा भिद्यते। तद्यथा। समानधर्मात्किमयं स्थाणुः स्यात्पुरुषो वेति।१। अनेकधर्मादाकाशविशेषगुणत्वात्किमयं शब्दो नित्यः स्यादनित्यो वेति।२। विप्रतिपत्तेरेके भौतिकानीद्रियाण्याहुरन्ये चाऽभौतिकानीति।३। उपलब्धेः किं सदुदकमुपलभ्यत उताऽसदिति।४। अनुपलब्धेः किं विद्यमानः पिशाचो नोपलभ्यते किं वाऽविद्यमानः।५। अनवधारर्णत्वादूहाऽनध्यवसाययोर्न संशयादर्थान्तरभावः। तद्यथा वाह्यालीप्रदेशे पुरुषेणाऽनेनभवितव्यमित्यूहः। किं संज्ञकोऽयं वृक्ष इत्यनध्यवसायः।। मिथ्याऽध्यवसायो विपर्ययः। तद्यथा। द्वौ चन्द्राविति। सुप्तस्य गजदर्शनं चेति।। स्मरणज्ञानव्यवच्छेदार्थमनुभवग्रहणम्।। प्रमातृप्रमेयव्यवच्छेदार्थं फलाद्भेदज्ञापनार्थं च साधनग्रहणम्।। सम्यगनुभवः प्रमा। प्रमाकरणं प्रमाणम्। प्रमाश्रयः प्रमाता। प्रमाविषयः प्रमेयमिति।। तत्त्रिविधम्। प्रत्यक्षमनुमानमागम इति।।

तत्र सम्यगपरोक्षानुभवसाधनं प्रत्यक्षम्। तद्विविधम्। योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति।। तत्राऽयोगिप्रत्यक्षं प्रकाशदेशकालधर्माद्यनुग्रहादिन्द्रियार्थसंबंधविशेषेण स्थूलार्थग्राहकम्। तद्यथा। चक्षुःस्पर्शनयोगद्घटादिद्रव्यज्ञानम्। संयुक्तसमवायात्ताभ्यां घटत्वादिसंख्यापरिमाणादिज्ञानम्। चक्षुषैव रूपज्ञानम्। स्पर्शनेनैव स्पर्शज्ञानम्। घ्राणेनैव गन्धज्ञानम्। रसनेनैव रसज्ञानम्। मनसैव सुखादिज्ञानम्।। एतेषु संख्यादिष्वाश्रितानां सामान्यानां स्वाश्रयग्राहकैरिन्द्रियैः संयुक्तसमवेतसमवायाद्ग्रहणम्।।

श्रोत्रसमवायात् श्रवणेनैव शब्दज्ञानम्।। तदाश्रितसामान्यज्ञानं समवेतसमवायात्।। तदेतत्पंचविधसंबंधसंबद्धविशेषणविशेष्यभावाद्दृश्याभावसमवाययोर्ग्रहणम्। तद्यथा। घटशून्यं भूतलम्। इह भूतले घटो नास्तीति। तथाहि तन्तवः पटसमवायवंतः। तन्तुषु पटसमवाय इति। इत्येवं सर्वांश उदाहरणीयम्। समवायस्य तु क्वचिदेवग्रहणम्। यथा इह घटे ह्रपसमवायः। ह्रपसमवायवान्घटः।।

योगिप्रत्यक्षं तु देशकालस्वभावविप्रकृष्टार्थग्राहकम्।। तच्च द्विविधं युक्तावस्थायां वियुक्तावस्थायां चेति।। तत्र युक्तावस्थायामात्मान्तःकरणसंयोगादेव धर्मादिसहिताऽशेषार्थग्रहणम्।। वियुक्तावस्थायां तु चतुष्टयत्रयद्वयसन्निकर्षाद्ग्रहणं यथासंभवेन योजनीयम्।। अत्रैवार्षमन्तर्भूतम्। प्रकृष्टधर्मजत्वाऽविशेषादिति।।

तच्च द्विविधम्। सविकल्पं निर्विकल्पं च।। तत्र संज्ञासंज्ञिसंबंधोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पं यथा देवदत्तोयं दंडीत्यादि।। वस्तुस्वभावमात्रावभासकं निर्विकल्पं यथा प्रथमाक्षसन्निपातजं ज्ञानम्। युक्तावस्थायां योगिज्ञानं च।।

(इति न्यायसारे प्रथमः परिच्छेदः।।)

सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानम्। स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभावः। स द्विविधोऽन्वयव्यतिरेकभेदात्।। साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः। साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेकः।। साधनं लिङ्गम्। तच्च द्विविधं दृष्टं सामान्यतोदृष्टं च। तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टं यथा धूमोऽग्नेरिति। स्वभाविप्रकृष्टार्थाऽनुमापकं सामान्यतोदृष्टं यथा ह्रपादिज्ञानं चक्षुरादेरिति।।

तत्पुनर्द्विविधम्। स्वार्थं परार्थं चेति। तत्र परोपदेशानपेक्षं स्वार्थं। परोपदेशापेक्षं परार्थम्। परोपदेशस्तु पंचावयवं वाक्यम्।। प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः।।

तत्र प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा यथा शब्दोऽनित्यः।।

साधनत्वख्यापकं लिंगवचनं हेतुः। स त्रिविधः। अन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकी चेति।। तत्र पंचह्रपोऽन्वयव्यतिरेकी। ह्रपाणि तु पक्षधर्मत्वं सपक्षेसत्वम् विपक्षाद्व्यावृतिरबाधितविपयत्वमसत्प्रतिपक्षत्वं च।।

तत्र साध्यधर्मविशिष्टः पक्षः। तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वम्।। साध्यसमानधर्मा धर्मी सपक्षः। तत्र सर्वस्मिन्नेकदेशे वा हेतोर्वृतिःसपक्षेसत्वम्।। साध्यव्यावृत्तधर्मा धर्मी विपक्षः। तत्र सर्वस्मिन्विपक्षे हेतोरवृत्तिर्विपक्षाद्व्यावृत्तिः।। प्रमाणाऽविरोधिनि प्रतिज्ञातेऽर्थे हेतोर्वृत्तिरबाधितविषयत्वम्।। साध्यतद्विपरीतयोः साधनस्याऽत्रिह्रपत्वमसत्प्रतिपक्षत्वम्।।

स द्विविधः। सपक्षवृत्तिभेदात् तद्यथा शब्दोऽनित्यः कार्यत्वादिति सपक्षव्यापकः। सामान्यवत्वे सति-अस्मदादिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैकदेशवृत्तिः।।

पक्षव्यापकः सपक्षवृत्तिरविद्यमानविपक्षः केवलान्वयी। स पूर्ववद्द्विविधः। तद्यथा विवादास्पदीभूतान्यदृष्टादीनि कस्यचित्प्रत्यक्षाणि प्रमेयत्वात्करतलादिवदिति सपक्षव्यापकः। सैव प्रतिज्ञा मीमांसकानामप्रत्यक्षत्वादस्मत्सुखादिवदिति सपक्षैकदेशवृत्तिः।।

केवलव्यतिरेकी यथा पक्षव्यापकोऽविद्यमानसपक्षो विपक्षाद्व्यावृत्तः। स चाऽप्रसंगोन्नेयी प्रसंगोन्नेयी च। सर्व कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वात् यथाऽऽकाशे। प्रसंगद्वारेण यथा नेदं निरात्मकं जीवच्छरीरमप्राणादिमत्त्व-प्रसंगाल्लोष्ठवदिति।।

एतेन हेत्वाभासानामहेतुत्वं भवति। यतो हेतुत्वलक्षणरहिता हेतुवदाभासमाना हेत्वाभासाः। ते चानेकप्रकारा असिद्धविरुद्धाऽनैकान्तिकाऽनध्यवसितकालात्ययापदिष्ट-प्रकरणसमाः।।

तत्राऽनिश्चितपक्षवृत्तिरसिद्धः। पक्षविपक्षयोरेव वर्तमानो विरुद्धः। पक्षसपक्षविपक्षवृत्तिरनैकान्तिकः। साध्याऽसाधकः पक्ष एव वर्तमानोऽनध्यवसितः। प्रमाणबाधिते पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः। स्व-परपक्षसिद्धावपि त्रिह्रपो हेतुः प्रकरणसमः।। यद्यपि चैषां सूक्ष्मा भेदा अनंतत्वान्न शक्यन्ते वक्तुं तथापि स्थूलां दृष्टिमाश्रित्य कियंतो भेदाः प्रदर्श्यन्ते।।

असिद्धस्तावत्। स्वह्रपासिद्धो यथाऽनित्यः शब्दश्चाक्षुषत्वात्।१। व्यधिकरणाऽसिद्धो यथाऽनित्यः शब्दः पटस्य कृतकत्वात्।२। विशेष्याऽसिद्धो यथाऽनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात्।३। विशेषणाऽसिद्धो यथाऽनित्यः

शब्दश्चाक्षुषत्वे सति सामान्यवत्त्वात्।४। विभागाऽसिद्धो यथाऽनित्यः शब्दः प्रयत्नान्तरीयकत्वात्।५। आश्रयासिद्धो यथाऽस्ति प्रधानं विश्वपरिणामित्वात् आश्रयैकदेशाऽसिद्धो यथा नित्याः प्रधानपुरुषेश्वरा अकृतकत्वात्।७। व्यर्थविशेष्याऽसिद्धो यथाऽनित्यः शब्दः कृतकत्वे सति सामान्यवत्त्वात्।८। व्यर्थविशेषणाऽसिद्धो यथाऽनित्यः शब्दः सामान्यवत्त्वे सति कृतकत्वात्।९। संदिग्धाऽसिद्धो यथा धूमबाष्पादिविवेकाऽनिश्चये कश्चिदाहाऽग्निमानयं प्रदेशो धूमवत्त्वात्।१०। संदिग्धविशेष्याऽसिद्धो यथाऽद्यापि रागादियुक्तः कपिलः पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्वज्ञानत्वात्।११। संदिग्धविशेषणाऽसिद्धो यथाऽद्यापि रागादियुक्तः कपिलः सर्वदा तत्वज्ञानरहितत्वे सति पुरुषत्वात्।१२।। एतेऽसिद्धभेदा यदोभयवाद्यसिद्धत्वेन विवक्षितास्तदोभयाऽसिद्धा भवन्ति। यदा त्वन्यतरवाद्यसिद्धत्वेन विवक्षितास्तदान्यतराऽसिद्धा भवन्ति।।

विरुद्धभेदास्तु सति सपक्षे चत्वारो विरुद्धाः।। पक्षविपक्षव्यापको यथा नित्यः शब्दः कार्यत्वात्।१। विपक्षैकदेशवृत्तिः पक्षव्यापको यथा नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात्।२। पक्षविपक्षैकदेशवृत्तिर्यथा नित्यः शब्दः प्रयत्नान्तरीयकत्वात्।३। पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा नित्या पृथिवी कृतकत्वात्।४।

असति सपक्षे चत्वारा विरुद्धाः।। पक्षविपक्षव्यापको यथाऽऽकाशविशेषगुणः शब्दः प्रमेयत्वात्।१। पक्षव्यापको विपक्षैकदेशवृत्तिर्यथाऽऽकाशविशेषगुणः शब्दः कार्यत्वात्।२। पक्षविपक्षैकदेशवृतिर्यथाऽऽकाशविशेषगुणः शब्दः प्रयत्नानन्तरीयकत्वात्।३। विपक्षव्यापकः पक्षैकदेशवृतिर्यथाऽऽकाशविशेषगुणः शब्दोऽपदात्मकत्वात्।४।

ननु चत्वार एव विरुद्धभेदा नान्ये तेषामसिद्धलक्षणोपपन्नत्वेनाऽसिद्धत्वात्। नैष दोष उभयलक्षणोपपन्नत्वेनोभयव्यवहारविषयत्वात् तुलायां प्रमाणप्रमेयव्यवहारवत्।।

अनैकान्तिकभेदास्तु। पक्षत्रयव्यापको यथाऽनित्यः शब्दः प्रमेयत्वात्।१। पक्षव्यापकः सपक्षविपक्षैकदेशवृर्तिथा नित्यः शब्दः प्रत्यक्षत्वात्।२। पक्षसपक्षव्यापको



विपक्षैकदेशवृतिर्यथाऽयं गौर्विषाणित्वात्।३। पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा

नायं गौर्विषाणित्वात्।४। पक्षत्रयैकदेशवृत्तिर्यथाऽनित्या पृथिवी प्रत्यक्षत्वात्।५। पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा द्रव्याणि दिक्कालमनांसि-अमूर्तत्वात्।६। पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा न द्रव्याणि दिक्कालमनांस्यमूर्तत्वात्।७। सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा न द्रव्याण्याकाशकालदिगात्ममनांसि क्षणिकविशेषगुणरहितत्वात्।।८।।

अनध्यवसितभेदास्तु। अविद्यमानसपक्षविपक्षः पक्षव्यापको यथा सर्वमनित्यं सत्त्वात्।१। अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा सर्वमनित्यं कार्यत्वात्।२। विद्यमानसपक्षविपक्षः पक्षव्यापको यथाऽनित्यः शब्द आकाशविशेषगुणत्वात्।३। विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा सर्व द्रव्यमनित्यं क्रियावत्वात्।४। अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा सर्वं कार्यं नित्यमुत्पत्तिधर्मकत्वात्।५। अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा सर्वं कार्यं नित्यं सावयवत्वात्।६।

कालात्ययापदिष्टभेदास्तु। प्रत्यक्षविरुद्धो यथाऽनुष्णोऽग्निः कृतकत्वात्।१। अनुमानविरुद्धो यथाऽनित्याः परमाणवो मूर्त्तत्वात्।२। आगमविरुद्धो यथा ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवत्।३। प्रत्यक्षैकदेशविरुद्धो यथा सर्वं तेजोऽनुष्णं रूपित्वात्।४। अनुमानैकदेशविरुद्धो यथा नित्याऽऽश्रया द्रवत्वरूपरसगन्धस्पर्शा नित्या अप्रदेशवृत्तिसमानजात्यारंभकत्वे सति परमाणुवृत्तित्वात् तद्गतैकत्ववत्।५। आगमैकदेशविरुद्धो यथा सर्वेषां देवर्षीणां शरीराणि पार्थिवानि शरीरत्वादस्मदादिशरीरवत्।६।

प्रकरणसमस्योदाहरणं यथाऽनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात्सपक्षवत्। नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवत्।।

एकत्र तुल्यलक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाऽव्यभिचारीत्येके यथा नित्यमाकाशममूर्तत्वादात्मवत्। एवमनित्यमाकाशमस्मदादिबाह्येन्द्रिय-ग्राह्यगुणाधारत्वात् घटवदिति।। स खलु पुरुषविशेषमपेक्षमाणो हेत्वाभासो भवत्यन्यतरासिद्धवत्।।

सम्यग्दृष्टान्ताभिधानमुदाहरणम्। तद्विविधं साधर्म्यवैधर्म्यभेदात्।। तत्रान्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणं यथाऽनित्यः शब्दस्तीव्रादिधर्मोपेतत्वात्। यद्यत्तीव्रादिधर्मोपेतं तत्तदनित्यं दृष्टं यथा सुखादिः।। व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणम्। यदनित्यं न भवति तत्तीव्रादिधर्मोपेतमपि न भवति यथाकाशमिति।।

एतेनोदाहरणाभासानामनुदाहरणत्वमुक्तं भवति। उदाहरणलक्षणरहिता उदाहरणवदाभासमाना उदाहरणभासास्तेचानेकप्रकाराः।। यथा चाऽनित्यं मनो मूर्त्तत्वादित्यस्मिन्नेव प्रयोगे सर्वेप्युदाहरणाभासा उच्यन्ते।। यन्मूर्त्तं तदनित्यं दृष्टं यथा परमाणुरिति साध्यविकलः।१। यथा कर्मेति साधनविकलः।२। यथाऽऽकाशमित्युभयविकलः।३। यथा खपुष्पमित्याश्रयहीनः।४। घटवदित्यव्याप्त्यभिधानम्।५। यदनित्यं तन्मूर्त्तं दृष्टमिति विपरीतव्याप्त्यभिधानम्।६। इत्येतौ वचनदोषौ।। यत्त्वनित्यं न भवति तन्मूर्त्तमपि न भवति यथा परमाणुरिति साधनाऽव्यावृत्तः।७। यथा कर्मेति साध्याऽव्यावृत्तः।८। यथा घट इत्युभयाऽव्यावृत्तः।९। यथा खपुष्पमित्याश्रयहीनः।१०। आकाशवदित्यव्याप्त्यभिधानम्।११। यन्न मूर्त्तं तदनित्यं न भवति यथाऽऽकाशमिति विपरीतव्याप्त्यभिधानम्।१२। इत्येतौ वचनदोषौ।। अत्राद्याः षट् साधर्म्योदाहरणाभासाः। इतरे षट् वैधर्म्योदाहरणाभासा इति।। अन्ये तु संदेहद्वारेणाऽपरानष्टावुदाहरणाभासान्वर्णयंति।। संदिग्धसाध्यो यथा महाराज्यं करिष्यत्ययं सोमवंशोद्भूतत्वाद्विवक्षितराजपुरुषवदिति।१३। संदिग्धसाधनो यथा नायं सर्वज्ञो रागादिमत्त्वाद्रथ्यापुरुषवत्।१४। संदिग्धोभयो यथा स्वर्गं गमिष्यत्ययं विवक्षितः पुरुषः समुपार्जितशुक्लधर्मत्वादपरिचितदेवदत्तपुत्रवत्।१५। संदिग्धाश्रयो यथा नायं सर्वज्ञो बहुवक्तृकत्वात् भविष्यद्देवदत्तपुत्रवत्।१६। संदिग्धसाध्याऽव्यावृत्तो यथा यो महाराज्यं न करिष्यति स सोमवंशोद्भूतो न भवति यथाऽन्यो राजपुरुषः।१७। संदिग्धसाधनाव्यावृत्तो यथा यस्तु सर्वज्ञः स रागादिरहितो यथा समस्तशास्त्राभिज्ञ इति।१८। संदिग्धोभयाव्यावृत्तो यथा यः स्वर्गं न गमिष्यति स समुपार्जितशुक्लधर्मोऽपि भवति यथा दुःस्थः पुरुषः।११। संदिग्धाश्रयो यथा यः सर्वज्ञः स बहुवक्ता न भवति यथा भविष्यद्देवदत्तपुत्रः।२०।।

दृष्टान्ते प्रसिद्धाऽविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिख्यापकं वचनमुपनय:।। स पूर्ववदद्विविध:। तथाच तीव्रादिधर्मोपेत: शब्द इति साधर्म्योपनय:। न तथा च तीव्रादिधर्मोपेत: शब्दो न भवतीति वैधर्म्योपेत:।।

उपनयानंतरं सहेतुकं प्रतिज्ञावचनं निगमनं। तस्मादनित्य एवेति।। न चेदमनर्थकम्। साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वादिति। न च तदंतरेण साध्यावधारणमुपपद्यते। तथा चोक्तम्।

विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति। गौ.सू. १-१-४१।।

निगमनाभिधानमसाधनांगमभ्युपगम्य बाधकं प्रमाणमभ्युपगच्छतो निग्रहस्थानं प्रसज्येत। निगमनार्थत्वाद्बाधकस्य। निगमनार्थविप्रतिपत्तौ हि बाधक-प्रमाणोपन्यासोऽभ्युक्तो हेत्वर्थविप्रतिपत्तौ तत्साधकप्रमाणोपन्यासवदिति।। सोयं परमो न्यायो विप्रतिपन्नपुरुषप्रतिपादकत्वात् कथाप्रवृत्तिहेतुत्वाच्च।।

वादिप्रतिवादिनो: पक्षप्रतिपक्षपरिग्रह: कथा। सा द्विविधा वीतरागकथा विजिगीषुकथा चेति। यत्र वीतरागो वीतरागेण सह तत्वनिर्णयार्थं साधनोपालंभौ करोति सा वीतरागकथा वादसंज्ञयैवोच्यते। तथा चोक्तं-

प्रमाण-तर्कसाधनोपालंभ: सिद्धान्ताविरुद्ध: पंचावयवोपपन्न: पक्षप्रतिपक्षपरिग्रहो वाद:।। गौ.सू. १-२-१

तं प्रतिपक्षस्थापनाहीनमपि वा कुर्यात्। प्रयोजनार्थित्वेन यथा शिष्यो गुरुणा सह प्रश्नद्वारेणेवेत्यर्थ:।। यत्र विजिगीषुर्विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते वीतरागो वा पराऽनुग्रहार्थं ज्ञानांकुरसंरक्षणार्थं च प्रवर्तते सा चतुरंगा वादिप्रतिवादिसभापतिप्राश्निकांगा विजिगीषुकथा जल्पवितंडा संज्ञोक्ता।। तथाचाह

तत्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कंटकशाखावरणवत्। गौ.सू. ४-२-५०।।

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प:। गौ.सू. १-२-२।।



स प्रतिपक्षस्थापनाहीनो वितण्डा। गौ.सू. १-२-३।।

वचनविघातोऽर्थविकल्पोपपत्त्या छलम्। गौ.सू. १-२-१०॥

तत्त्रिविधम् वाक्छलं सामान्यछलमुपचारच्छलं चेति।

गौ.सू.१-२-११।

यथा अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्।

गौ.सू. १-२-१२॥

नवकम्बलोयं माणवक इत्युक्ते छलवाद्याह कुतो नवकंबला इति। तस्याऽप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यम्। नव: कंबलोऽस्येति वक्तुरभिप्रायाऽपरिज्ञानाद्वा विप्रतिपत्तेर्वा विपरीतज्ञानादिति॥

संभवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम्॥

गौ.सू. १-२-१३॥

अहो न खल्वसौ ब्राह्मणश्चतुर्वेदाभिज्ञ इत्युक्ते केनचिन्न्यायवाद्याह किमत्राश्चर्यं संभवति हि ब्राह्मणे चतुर्वेदाभिज्ञत्वमित्यत्रच्छलवाद्याह न व्रात्येनानैकान्तिकत्वात्। तस्याऽपि पूर्ववन्निग्रहस्थानं वाच्यम्। कस्माद्धेतुत्वेनाऽविवक्षितत्वात्। किं तर्हि। ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वमाश्चर्यकारणं न भवति सुक्षेत्रशालिसंपद्वत्॥

उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारच्छलम्। यथा मञ्चा: क्रोशन्तीत्युक्तेच्छलवाद्याह पुरुषा: क्रोशन्ति न मञ्चास्तेषामचेतनत्वात्। इति तस्याऽपि निग्रहस्थानं वाच्यं पूर्ववत्। उभयथाऽपि लोके शास्त्रे च प्रयोगदर्शनादिति॥

प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसंगो जाति:॥ पराजयनिमित्तं निग्रहस्थानमिति वहवश्चानयो: सूक्ष्मा भेदास्तेषां कियन्तो भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते॥

साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्ते: साधर्म्यवैधर्म्यसामौ।

गौ.सू. ५-१-२॥

यथाऽनित्य: शब्द: कृतकत्वाद्घटवदित्युक्ते जातिवाद्याह यद्यानित्यघटसाधर्म्यात्कृतकत्वादनित्य: शब्द इष्यते तर्हि नित्याकाशसाधर्म्यादमूर्त्तत्वान्नित्य: प्राप्नोति यदि च नित्याकाशवैधर्म्यात्कृतकत्वादनित्य इष्यते तर्हि घटाद्यनित्यवैधर्म्यादमूर्त्तत्वान्नित्य: प्राप्नोति विशेषाभावात्। अनयोरुत्तरम्।

अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वाभ्युपगमादप्रसंगो धूमादिवत्। साध्यदृष्टान्तयोर्द्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः। गौ.सू. ५-१-४।।

साध्ये दृष्टान्तादनिष्टधर्मप्रसंग उत्कर्षसमः।। इष्टधर्मनिर्वृत्तिरपकर्षसमः।। यदि कृतकत्वाद्घटवदनित्यशब्द इष्यते तदा घटवदेव सावयवोऽपि स्यात्। अथ नैवमनित्योऽपि तर्हि न स्यादविशेषादिति। अश्रावणश्च घटो दृष्टः शब्दोपि श्रावणो न स्यादविशेषादिति। शब्दो यदि कृतकत्वाऽनुमानेनाऽनित्यो वर्ण्यते तदा घटोऽपि कृतकत्वाऽनुमानेनाऽनित्यो वर्ण्यः स्यात्। घटस्तेनैवानुमानेनाऽनित्यो वर्ण्यते ततः शब्दोप्यवर्ण्यः स्याद् विशेषादिति वर्ण्यावर्ण्यसमौ।। कृतकत्वाऽविशेषेऽपि यथामूर्त्तत्वाऽमूर्तत्वादिधर्मविकल्पस्तथा नित्यत्वाऽनित्यत्वविकल्पोऽपि स्यादविशेषादिति विकल्पसमः।। यदि कृतकत्वादुभयोरनित्यत्वं तर्हि साध्यत्वमुभयोः स्यान्न वा कस्यचिदविशेषादिति साध्यसमः।।

एतेषामुत्तरं। किंचित्साधर्म्यादुपसंहारे सिद्धे वैधर्म्यादप्रतिषेधः। गौ.सू. ५-१-५।।

किंचित्साधर्म्याद्धूमवत्त्वादिलक्षणात्साध्यदृष्टान्तयोर्धर्मविकल्पेऽपि व्यवस्था दृष्टा। तदपलत्वे लोकादिविरोधः सर्वाऽनुमानानामप्रामाण्यप्रसंगश्चेति।।

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ। गौ.सू. ५-१-७।।

यद्ययं हेतुः प्राप्य साध्यं साधयेत्तदोभयोः प्राप्त्यविशिष्टत्वादंगुल्योरिव किं कस्य साध्यं साधनं चेति। अप्राप्यसाधको नास्ति काष्ठादग्निवदिति।। अनयोरुत्तरम्।

घटादि-निष्पत्ति-दर्शनात्पीडने चाभिचारादप्रतिषेधः। गौ.सू. ५-१-८।।

प्राप्त्यप्राप्त्यविशेषेऽपि प्रतिनियतार्थवृत्तय एवैते साध्यसाधनत्वादयो धर्मा दृष्टान्ते निराकर्तुमशक्याः सर्वप्रमाणविरोधादिति।।

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः।। गौ.सू. ५-१-१२।।

यथाऽनित्यः शब्दः कार्यत्वादित्युक्ते प्रागुत्पत्तेरनित्यत्वे कारणं नास्तीति

नित्यः प्रसक्तः। तस्योत्पत्तिरनुपपन्नेति।। अस्योत्तरम्।

तथाभावादुत्पन्नस्य कारणोपपत्तेर्न्न कारणप्रतिषेधः। गौ.सू. ५-१-१३॥

अनुत्पन्नः शब्द एव नास्ति कस्य नित्यत्वादिधर्माश्चिन्त्यन्ते॥

त्रैकाल्याऽसिद्धेर्हेतोरहेतुसमः॥ गौ.सू. ५-१-१८॥

यदि पूर्वं साधनमसति साध्ये कस्य साधनम्। अथ युगपत्तथापि किं कस्य साधनं साध्यं वा द्वयोस्तुल्यकालत्वादिति॥ अस्योत्तरम्। न हेतुतः साध्यसिद्धे प्रवृत्त्यादिविरोध इति सूत्रार्थः। प्रतिषेधानुत्पत्तेश्च त्रैकाल्यासिद्धिः। स्वमतेनैव प्रतिषेधासिद्धौ हेतुसिद्धिरिति सूत्रार्थः॥

एकधर्मोपपत्तेरविशेषे सर्वाऽविशेषप्रसंगात्सद्भावोपपत्तिरविशेषसमः।
गौ.सू. ५-१-२३॥

यथा यदि घटशब्दयोरेकैकस्य कार्यत्वस्योपपत्तेरनित्यत्वेनाऽविशेष इष्यते सर्वभावानां तर्हि सद्भावोपपत्तेरविशेषः प्रसज्यत इति॥ अत्रेदमुच्यते। सर्वथाऽविशेषे प्रत्यक्षविरोधः। अनित्यत्वेनाऽविशेषे त्वनुमानागमविरोधः। केनचिदविशेषे प्रमेयत्वादिना सिद्धसाधनमिति॥

निर्दिष्टकारणाभावेऽप्युपलंभादुपलब्धिसमः। गौ.सू. ५-१-२७

पृथिव्यादिषु कार्यत्वसिद्धये निर्दिष्टस्य सावयवस्याऽभावेऽपि बुद्ध्यादौ कार्यत्वमुपलब्धमिति॥ अस्योत्तरम्। सपक्षैकदेशस्यापि धूमादेर्गमकत्वदर्शनादप्रतिषेध इति॥ कथं तर्हि बुद्ध्यादौ कार्यत्वसिद्धिरत आह। कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः। प्रमाणान्तरादपि कार्यत्वसिद्धिरित्यर्थः॥ प्रमाणान्तरं वाऽनुपलब्धिकारणेष्वसत्सु प्रागूर्ध्वं वाऽनुपलंभात् घटवदिति॥

तदनुपलब्धेरनुपलंभादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः।
गौ.सू. ५-१-२९॥

तस्य बुद्ध्यादिकार्यस्याऽनुपलब्धेरनुपलंभादभावसिद्धावनुपलब्धिविपरीतोपलब्ध्युपपत्तेः प्रागूर्ध्वमपि बुद्ध्यादेः सद्भावः सेत्स्यतीत्यभिप्रायः॥ अस्योत्तरम्

अनुपलंभात्मकत्वादनुपलब्धेरहेतुः। गौ.सू. ५-१-३५॥

नास्तीति ज्ञानमनुपलब्धिः सा तत्स्वभावतया प्रत्यात्मसंवेद्या तत्सदनुपलब्धिरसिद्धेत्यभिप्रायः।।

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः। गौ.सू. ५-१-३५।।

अनित्यत्वधर्मस्य नित्यं सर्वदा सद्भावे धर्मिणोऽपि शब्दस्य सर्वदा सद्भावः। अथाऽनित्यत्वं सर्वदा नास्ति तथाप्यनित्यत्वाभावान्नाऽनित्यः शब्द इति।। अस्योत्तरम्। अनित्यत्वस्य सर्वदाऽभ्युपगमे नित्यत्वविरोधः। अनभ्युपगमे चाऽसिद्धो हेतुः। प्रध्वंसश्चानित्यत्वं तव तस्मिन्सति शब्दसद्भाव इति। एतेनान्यत्वस्यात्मनोऽनन्यत्वादन्यत्वं नास्तीत्यादीन्यसदुत्तराणि प्रत्युक्तानि। निमित्तान्तरात्संज्ञान्तरे योज्यमानेऽर्थे तथाभावस्य निराकर्तुमशक्यत्वात्।। आनन्त्यान्न सर्वाण्यपि जात्युत्तराण्युदाहर्तुं शक्यन्ते। सूत्राणामप्युदाहरणार्थत्वादित्युक्ता जातिभेदाः।।

अथेदानीं निग्रहस्थानान्युच्यन्ते। तान्यपि विप्रतिपत्त्य-प्रतिपत्त्योर्विकल्पादसंख्यानि। अतः संक्षेपतो व्युत्पाद्यन्ते।।

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि।।

तत्र साध्ये प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिः।। यथा यदि कृतकत्वाद् घटवदनित्यः शब्द इष्यते तर्ह्याकाशवदमूर्त्तत्वान्नित्यः किन्नेष्यते। एवं प्रतिवादिनोक्तो वाद्याह। भवतु किं नो बाधत इति। तस्य नित्यत्वाऽभ्युपगमेनाऽनित्यत्वप्रतिज्ञा हीयत इत्यतः प्रतिज्ञाहानिनिग्रहस्थानं भवति।१।

प्रतिज्ञातार्थस्य प्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्।। यथा सर्वमनित्यं सत्वादित्यत्र दृष्टान्ताऽभावेन प्रतिज्ञातार्थ-प्रतिषेधे धर्मो विवादास्पदीभूतलक्षणस्तस्य विकल्पः प्रतिज्ञातार्थविशषणत्वेन योजनं। तदर्थ इति प्रतिषेधनिवृत्त्यर्थः। निर्देशो विशेषणाभिधानं विवादास्पदीभूतं सर्वमनित्यमित्येतत्प्रतिज्ञान्तरं निग्रहस्थानं हेत्वन्तरवत्।।२।।

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः। गौ.सू. ५-२-४।। यथा गुणव्यतिरिक्तं द्रव्यं भेदेनानुलंभाद्घटवत्।।३।।

पक्षप्रतिषेधे प्रतिज्ञातार्थाऽपनयनं प्रतिज्ञासंन्यासः। गौ.सू. ५-२-५।। यथाऽनुष्णोऽग्निरित्येतस्य पक्षविरोधित्वेन प्रतिषेधे वाद्याह। संपश्यध्वमहो मध्यस्था नाहमनुष्णमग्निं ब्रवीम्यनुक्तोपालंभोयमित्येत्प्रतिज्ञासन्न्यासलक्षणं निग्रहस्थानम्।।४।।

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरनिग्रहस्थानम्।। यथा नित्या वेदा अस्मर्यमाणकृतकत्वादित्येतस्य जीर्णकूर्पाऽऽरामादिभिरनैकान्तिकत्वेन प्रतिषेधे संप्रदायविच्छेदे सतीति विशेषणमिच्छतो हेत्वन्तरं निग्रहस्थानम्। पूर्वस्याऽसाधकस्योपादानात्।।५।।

प्रकृतादर्थादप्रतिसबन्धार्थमर्थान्तरम्। गौ.सू. ५-२-७।। यथा नित्यः शब्दोऽस्पर्शवत्त्वादिति हेतुः। हेतुश्च हिनोतेर्धतोः तुनि प्रत्यये सति कृदन्तं पदमित्यादिप्रसक्तानुप्रसक्त्या प्रकृतार्थाऽनुपयोगिशास्त्रान्तरमुपदिशतोऽर्थान्तरं निग्रहस्थानम्।।६।।

वर्णक्रमनिर्देशवन्निरर्थकम्। गौ.सू. ५-२-८।। यथा नित्यः शब्दः कचतटपानां गजबडवत्वात् घझडढधभवत्।।७।।

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यतीतमविज्ञातार्थं।। यथा यद्वाक्यं त्रिरभिहितमप्यप्रतीतप्रयोगाऽतिद्रुतोच्चारितादिना निमिनेन परिषत्प्रतिवादिभ्यां न ज्ञायते तदज्ञानसंवरणायोक्तमविज्ञातार्थं निग्रहस्थानम्।।८।।

पौर्वापर्याऽयोगादप्रतिसंबद्धार्थमपार्थकम्। गौ.सू. ५-२-१०।। यथा दशदाडिमानि षडपूपाः कुण्डमजाजिनमित्यादिः।।९।।

अवयवविपर्यासवचनमप्राप्तकाम्। गौ.सू. ५-२-११।। प्रतिज्ञादीनामर्थवशात्क्रमस्तेषां विपर्ययेणाभिधानं निग्रहस्थानम्।।१०।।

हीनमन्यतमेनाप्यवयवेन न्यूनम्। गौ.सू. ५-२-१२।। साधनाभावे साध्यसिद्धेरयोगात्।।११।।

हेतूदाहरणाभ्यामधिकम्।। एकेन कृतत्वादितराऽऽनर्थक्यादिति।।१२।।

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्। गौ.सू. ५-२-१४।। सार्थकं पुनरभिधानमनुवादस्तद्व्यतिरेकेण पुनर्वचनं पुनरुक्तम्। यथा नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम्।। अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम्।। साधर्म्योदाहरणेऽभिहिते वैधर्म्योदाहरणाऽभिधानमिति। कथं तन्निग्रहस्थानम्। कथावसानविरोधित्वादेकेन कृतार्थत्वादितरानर्थक्यात्।।१३।।

विज्ञातस्य परिषदा त्रिरभिहितस्याऽप्यप्रत्युच्चारणमननुभाषणं प्रतिवादिनो निग्रहस्थानम्। अप्रत्युच्चारयन्किमाश्रयः परपक्षप्रतिषेधं ब्रूयादिति।।१४।।

अविज्ञातार्थं चाज्ञानम्।। यच्च वाक्यं त्रिरभिहितमपि परिषदाऽवगतार्थं प्रतिवादी प्रत्युच्चारयन्नार्थतः सम्यगधिगच्छति तदज्ञानं नाम निग्रहस्थानं भवति।।१५।।

कथामभ्युपगम्य तूष्णींभावोऽप्रतिभा वादिप्रतिवादिनोर्निग्रहस्थानम्।।१६।।

कार्यव्यासंगात्कथाविच्छेदो विक्षेपः। गौ.सू. ५-२-१६।। कथामभ्युपगम्य सभ्येषु मिलितेषु ब्रवीत्यद्य मे महत्प्रयोजनमस्ति तस्मिन्नवसिते पश्चात्कथयिष्यामीति।।१७।।

स्वपक्षदोषाभ्युपगमात्परपक्षदोषो मतानुज्ञा।। यः स्वपक्षे मनागपि दोषं न परिहरति केवलं परपक्षे दोषं प्रसंजयति। भवांश्चोर इत्युक्ते त्वमपि चोर इति। तस्येदं निग्रहस्थानम्। स्वयं दोषाभ्युपगमात्।

निग्रहप्राप्तस्याऽनिग्रहः पर्यनुयोज्योपेक्षणम्।। पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयस्तस्योपेक्षणं निग्रहप्राप्तौ सत्यामननुयोग इति। एतदुभाभ्यामनुक्तया परिषदा वक्तव्यम्।।११।।

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्याऽनुयोगः।। यथा सावयवत्वेन पृथिव्यादेः कार्यत्वसिद्धौ परो ब्रूयादप्रयोजकोयं हेत्वाभास इति। तस्येदं मिथ्याऽभियोगलक्षणं निग्रहस्थानम्।।२०।।

सिद्धान्तमभ्युपेत्याऽनित्यमात् कथाप्रसंगोऽपसिद्धान्तः।। यथा मीमांसामभ्युपगम्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह। कथं पुनरग्निहोत्रक्रियाध्वस्ता सती स्वर्गस्य साधिका भवतीत्यनुक्तः प्राह। अनया क्रिययाऽऽराधितो महेश्वरः

फलं ददाति राजादिवत्। तस्येश्वरानभ्युपगमादपसिद्धान्तो निग्रहस्थानम्।। प्रतिज्ञातार्थविपर्ययस्तु प्रतिज्ञाहानिर्नापसिद्धान्तः।।२१।।

हेत्वाभासाश्च यथोक्ताः। हेत्वाभासलक्षणेनैव यथोक्तेन हेत्वाभासा निग्रहस्थानानि।।२२।।

एतेन दुर्वचनकपोलताडनवादित्रादीनां साधनानुपयोगित्वेन निग्रहस्थानत्वं वेदितव्यं। नियमकथायामपशब्दादीनामपि।।

इति न्यायसारे द्वितीयः परिच्छेदः।।

अथावसितमनुमानमागमस्येदानीं लक्षणमुच्यते।। समयबलेन सम्यक्परोक्षानुभवसाधनमागमः।। स द्विविधो दृष्टाऽदृष्टार्थभेदात्। तत्र दृष्टार्थानां वाक्यानां प्रायेण प्रवृत्तिसामर्थ्यात्प्रामाण्यं गम्यते। अदृष्टार्थानां पुनराप्तोक्तेनेति।। कथं पुत्रकामो यजेतेत्यादिवाक्यानां प्रवृत्तिसामर्थ्यात्प्रामाण्यमनुमाय तत्प्रणेतुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वमवधार्य तत्प्रणीतानां सर्ववाक्यानामप्रामाण्ये कारणाऽभावात्प्रामाण्यमनुमीयत इति।। न नित्यत्वेन वाक्यानां हि नित्यत्वे प्रमाणाऽभावात्। अनित्यं पुनर्वाक्यत्वाद्यनेकमनुमानं। सर्वदोपलब्ध्यनुपलब्धिप्रसंगश्चेति विपर्ययो नियामकाभावात्। तदनुपलब्धिरिति चेन्न तदनिर्देशात्।। वायुसंयोगविभागाविति चेन्न सर्वशब्दानां युगपदग्रहणप्रसंगात्। कथम्। श्रोत्रं तावत्समानेन्द्रियग्राह्यसमानदेशसमानधर्मापन्नानां ग्रहणाय प्रतिनियतसंस्कारसंस्कार्यं न भवति इन्द्रियत्वाच्चक्षुर्वत्।।

शब्दा वा प्रतिनियतसंस्कारसंस्कार्या न भवन्ति समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसंबद्धत्वात् घटादिवत्। उत्पत्तिपक्षेप्ययं समानो दोष इति चेन्न मृत्पिंडप्रदीपदृष्टान्ताभ्यां कारकव्यंजकवैधर्म्यसिद्धेरित्यलमतिप्रसङ्गेनेति।।

एवमेतानि त्रीण्येव प्रमाणानीति।। एष्वेवोपमानाऽर्थापत्तिसंभवाऽभावैतिह्यादीनामन्तर्भावः।। तत्र यथा गौरेवं गवय इत्युपमानं शाब्देऽन्तर्भूतम्। अनेन सदृशी मदीया गौरित्युपमानमिति चेन्न तस्य स्मृतित्वात्।। पूर्वमेवहि सादृश्यविशिष्ट उपलब्धो गोपिण्डः। कस्मात्। उपलब्धियोग्यत्वात्। अयोग्यत्वे वा न कदाचिदुपलभ्येताऽदृष्टत्वात्।। निर्विकल्पेन

तु प्रत्यक्षेण पूर्वं सादृश्यमुपलब्धं न तदुपलब्ध्यभिमानो न भवति। निर्विकल्पकोपालंभेऽपि तेन तदुपलब्ध्यभिमानो न भवति। निर्विकल्पकोपालंभेऽपि संस्कारसहकारिसामर्थ्यादभावादिषु सविकल्पका स्मृतिर्दृष्टेति॥

संज्ञासंज्ञिसंबंधप्रतिपत्तिरथाऽप्तवचनकार्या। तथा प्रश्नोत्तराभिधानादन्य-प्रमाणाऽनिर्देशात्॥ अस्य गवयशब्दः संज्ञेति प्रतिपत्तावुपमानसिद्धिस्तथाशब्द-श्रवणादिति चेत्। एवं तर्हि गौरयमित्येवं संकेते कृतेऽस्य गोशब्दः संज्ञेति प्रतिपत्तौ प्रमाणान्तरं वाच्यम्। समानन्यायत्वात्। गोपिंडान्तरेऽपि संकेतग्रहणे प्रमाणान्तराभिधानप्रसंग इति॥ तथाशब्दानभिधानेऽपि प्रतिपादकप्रतिपाद्य-योरेवमेवाभिप्राय ईदृशस्य सर्वस्य गोशब्दः संज्ञेति सामर्थ्यादेवं प्रतिपत्तिरिति चेन्न। समानमेतदत्रापि गोसदृशो गवय इति शब्दादुभयोरेवाभिप्रायो गोसदृशस्यार्थस्य गवयशब्दः संज्ञेति सामर्थ्यादेवं प्रतिपत्तिरिति॥ न च प्रत्यक्ष एवाऽर्थे संज्ञासंज्ञिसंबंधप्रतिपत्तिरप्रत्यक्षेऽपि शक्रादौ संज्ञासंज्ञिसंबंधप्रतिपत्तिदर्शनात्॥

सूत्रविरोध इति चेन्न प्रमाणनिग्रहस्थानाभ्यां दृष्टान्तहेत्वाभासादीनामिव प्रयोजनवशेन पृथगभिधानादिति। तर्हि प्रयोजनं वाच्यमुच्यते। शब्दप्रामाण्यसमर्थनं प्रयोजनम्। कथम्। केचिदाहुः प्रत्यक्षानुमानविषयत्वे शब्दस्यानुवादकत्वमेव। अनुवादकं चाऽप्रमाणम्। तदविषयत्वे च संबंधाऽग्रहणादवाचकत्वम् पदार्थस्याप्रसिद्धत्वान्न च पदेन संबंधग्रहणमितरेतराश्रयत्वात्। वाक्यार्थस्तु प्रसिद्धार्थानां पदार्थानामन्वयमात्रमिति॥ तन्निराकरणार्थमुपमानं निदर्शनार्थत्वेन पृथगुक्तम्। यथा गवयार्थिनाऽप्रसिद्धगवयस्य प्रसिद्धगोसादृश्यमुपादायोपमानाख्येन वाक्येन संज्ञासंज्ञिसंबंधप्रतिपत्तिः क्रियते तथा किंचिन्निमित्तमुपादाय शक्रादि-पदपदार्थयोरपीति। तस्मादन्यार्थत्वान्न सूत्रविरोधः॥

परीक्षा चार्थापत्तिवत्प्रमाणस्य सतः प्रमाणेष्वंतर्भावज्ञापनार्थम्। अंतर्भावस्तु यथाश्रुतोऽप्यनुमान एवास्य निराकृतो नाऽऽगम इति॥

चतुष्ट्वाभिधानं सूत्रेषु पंचत्वादिनिराकरणार्थं न त्रित्वप्रतिषेधार्थं। प्रमाणसिद्धत्वादंतर्भावस्य॥ त्रित्वाऽनभिधानादयुक्तमिति चेन्नाऽस्य सूत्रकारस्यैवं स्वभावत्वात् स्वसिद्धान्तमपि क्वचिन्नाधत्ते। यथा कृत्स्नैकदेशविकल्पा-

दिनाऽवयविनिराकरणे विशिष्टानामूहादिशक्त्यतिशययुक्तानामेवात्राधिकारः। तस्मात्स्थितमुपमानं शब्देऽन्तर्भूतम्॥

अर्थापत्तेरप्यनुमानेऽन्तर्भावोऽविनाभावबलेनार्थप्रतिपत्तिसाधनत्वात्। अन्यथा नोपपद्यत इत्युक्ते सत्येवोपपद्यत इति लभ्यतेऽयमेवाऽविनाभावः॥ यत्र सामान्याऽऽकारेणाऽन्वयग्रहणं नास्ति यथा मुख्यकारणत्वाऽप्रतिबद्ध-शक्त्योस्तत्रार्थापत्तिः पृथक्प्रमाणमिति चेन्न। तत्रापि केवलव्यतिरेक्यनुमानाऽव्यतिरेकात्। केवलव्यतिरेक्यर्थापत्तिरिति संज्ञाभेदमात्रम्॥ अन्वयाऽभावान्नैतदनुमानमिति चेन्न केवलान्वयिनो व्यतिरेकाऽभावे प्रमाणान्तरत्वप्रसंगात्। अपि वा प्रत्यक्षादिभेदानां केनचिद्वैधर्म्येण भेदात्प्रमाणान्तरत्वप्रसंगः। तस्मादविनाभावबलेनैवार्थप्रतिपादक-त्वादर्थापत्तिरनुमानमिति॥

बहुसंख्याविषयत्वे सत्यल्पसंख्याविषयत्वस्य सर्वत्रोपलब्धत्वान्ना-नुमानात्संभवो भिद्यत इति॥

अभावस्य तु त्रिष्वपि यथासंभवेनान्तर्भावः। तथाहि। कौरबाद्यभाव-प्रतिपत्तिरागमात्। आत्मादिषु ह्वपाद्यभावप्रतिपत्तिरनुमानात्। भूतलादिषु घटाद्यभावप्रतिपत्तिः प्रत्यक्षात्। इन्द्रियव्यापारभावभावित्वादिति॥ अन्यत्र तद्भावभावित्वं पर्यवसितमिति चेन्न ह्वपादिष्विव बाधकाऽभावात्॥ संबंधाभावो बाधक इति चेन्न स्वपरपक्षयोरसिद्धत्वात् स्वपक्षे तावद्रूपादिष्विवापरोक्षानुभवकार्यानुमेयो योग्यताख्यः संबन्धः। परपक्षेऽपि संयुक्तविशेषणभावादिः॥ संयोगसमवायरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेन्न विशिष्टप्रत्ययवशेन तत्सिद्धिरिति॥

अनिर्दिष्टप्रवक्तृकं प्रवादपारंपर्यमैतिह्यमागमेऽन्तर्भूतम्॥ यथेह वटे यक्षः प्रतिवसति।

प्रयत्नजनिता शरीरतदवयवक्रिया चेष्टा सा नाट्यशास्त्रादिप्रसिद्धा समयबलेन पुरुषाभिप्रायमर्थविशेषं च गमयंती नाऽऽगमाद्भिद्यते। लिप्यक्षरादर्थप्रतिपत्तिवदिति॥ तदेवं व्यवस्थितमेतानि त्रीण्येव प्रमाणानीति॥

किं पुनरेभिः प्रमाणैः प्रमातव्यमित्युच्यते। प्रमेयम्। किं लक्षणम्। यद्विषयज्ञानमन्यज्ञानानामुपयोगित्वेनैव निःश्रेयससाधनं भवति तत्प्रमेयम्। तदेव तत्वतो ज्ञातव्यम् सर्वदा भावयितव्यं च। न कीटसंख्यादिवद् ज्ञानस्यानुपयोऽगित्वात्।।

तच्चतुर्विधम्। हेयं तस्य निर्वर्तकम् हानं तस्योपाय इति।। तत्र हेयं दुःखमनागतमेकविंशतिप्रकारकम्। शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेति।। तत्र शरीरं दुःखायतनत्वाद्दुःखम्। इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात्। सुखं दुःखानुषंगाद्दुःखम्। दुःखं च बाधना पीडा संतोषात्मकं मुख्यमेवेति।।

तस्य निर्वर्तकमसाधारणं कारणमविद्यातृष्णे धर्माधर्माविति। सम्यगध्यात्मविद्भिः प्रदर्शितार्थविपरीतज्ञानमविद्या।। सहसंस्कारेण पुनर्भवप्रार्थना तृष्णा।। सुखदःखयोरसाधारणौ हेतू धर्माधर्माविति।।

हानं दुःखविच्छेदः। आत्यन्तिकमिति न कदाचित्कथंचिद्दुःखसंबंधः।।

तस्योपायस्तत्वज्ञानमात्मविषयम्।। तथा चोक्तम्। आत्मा वा अरे दृष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति। श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। ज्ञात्वा च सततं ध्येयः एते दर्शनहेतवः। तरति शोकमात्मविदिति।।

स द्विविधः। परश्चापरश्च। तथा चोक्तम्। द्वे ब्रह्मणी वेदितव्ये परं चापरं चेत्यादिः।। तत्रैश्वर्यविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान्महेश्वरः सर्वज्ञः सकलजगद्विधाता। स कथं ज्ञातव्यः। अनुमानादागमाच्च।। तथाहि विवादाध्यासितमुपलब्धि-मत्कारणकमभूत्वाभावित्वाद्वस्त्रादिवदिति। सामान्यव्याप्तरेनवद्यत्वेन निराकर्तुमशक्यत्वात्। ततः सामान्यसिद्धौ पारिशेषात्कार्यविशेषाच्च कर्तृविशेषसिद्धिः चित्रादिकार्यविशेषात्कर्तृविशेषसिद्धिवत्।।

एको हि रुद्रो न द्वितीयाय तस्थुर्य्य इमान्लोकानीशित ईशिनीभिरित्यागमाच्चेति।।

संसारभोक्ताऽनन्तोऽपरः। स खलु बुद्ध्यादिकार्याणामाश्रयभूतोऽनुमातव्यः। न हि कार्यमनाधारं किंचिदुपलब्धम्। न चेन्द्रियाणामाश्रयत्वमुक्तमुपहतेन्द्रियस्य विषयस्मरणाऽयोगात्। अन्यानुभूतेऽर्थेऽन्यस्य स्मरणाऽदर्शनात्। अत एव शरीरस्यापि

बाल्यकौमारादिभेदभिन्नत्वादस्मरणम्। एतेन पूर्वबुद्ध्यनुभूतेर्थ उत्तरबुद्धेः कार्यकारणभावात्स्मरणमपास्तमन्यत्वाऽविशेषात्।। कर्पासे रक्तताविदिति चेन्न साधनदूषणाऽसंभवात्। अन्वयाद्यभावान्नसाधनमसिद्धत्वाद्यनुद्भावनान्न दूषणमिति। न च कर्पासेऽपि निरन्वयविनाशोत्पादे रक्ततोत्पद्यते कर्पासान्तरवत्। एतेनैव क्षणिकत्वमपास्तम्।। प्रत्यभिज्ञाख्येन च प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं गृह्यते। प्रदीपादिष्विव भ्रान्तमिति चेन्नैकत्रबाध्यत्वेन भ्रान्तत्वं सर्वत्र तत्कल्पनायामतिप्रसंगात्। अनभ्युपगाच्च सादृश्यस्य क्षणिकत्वे भ्रान्तिबीजाभाव इति।।

तत्सिद्धमेतच्छरीरादिव्यतिरिक्त आत्मा व्यापको नित्य इति। नित्यत्वं कुत इति चेदनादित्वात्। तदेव कथम्। जातमात्रे जन्मान्तरानुभवसूचकस्मरणलिंगस्य हर्षभयशोकमोहशून्याभिलाषादेरुपलंभात्।।

धर्मादेराश्रयसंयोगाऽपेक्षस्य गुरुत्वादिवदाश्रयांतरे वाद्यादौ क्रियाकर्तृत्वादणिमाद्युपेतस्य युगपदसंख्यातशरीराधिष्ठातृत्वाच्च व्यापकत्वसिद्धिः।। तथा चोक्तं पुराणादिषु।

आत्मनो वै शरीराणि बहूनि मनुजेश्वराः। प्राप्य योग्यं बलं कुर्यात् तैश्च सर्वां महीं चरेत्।। भुंजीत विषयान्कैश्चित् कैश्चिदुग्रं तपश्चरेत्। संहरेच्च पुनस्तानि सूर्यस्तेजोगुणानिव।।

तदेवमपरात्मतत्वज्ञानं परलोकसद्भावेन परलोकप्रत्युपयो गित्वादधर्मक्षयहेतुत्वाच्च निश्रेयसांगामिति।।

परमात्मज्ञानं च तदुपासनांगत्वेनापवर्गसाधनम्।।

स चोपसनाविधिः क्लेशक्षयसमाधिलाभार्थमनुष्ठानम्। तथा चोक्तम्। तपःस्वाध्यायेश्वरप्रणिधानात्मिकाक्रियायोगः क्लेशतनूकरणार्थसमाधिलाभार्थश्चेति।।

तत्रोन्मादकामादिव्यपोहार्थमाध्यात्मिकादिदुःखसहिष्णुत्वं तपः।। प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यासः स्वाध्यायः।। परमेश्वरतत्वस्य प्रबन्धेनानुचिंतनमीश्वरप्रणिधानम्।। समासतो रागद्वेषमोहाः क्लेशाः समाधिप्रत्यनीकाः संसारापत्तिद्वारेण क्लेशहेतुत्वात्।।

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावंगानि।। तत्र देशकालावस्थाभिरनियताः पुरुषस्य शुद्धिहेतवो यमाः। अहिंसाब्रह्मचर्यास्तेयादय इति।। देशकालावस्थाद्यपेक्षिणः पुण्यहेतवः क्रियाविशेषा नियमाः। देवताप्रदक्षिणसंध्योपासनजपादयः।। योगकर्मविरोधिक्लेशजयार्थः करणबंध आसनम्। पद्मकस्वस्तिकादीनि।। कोष्ठ्यस्य वायोर्गतिविच्छेदः प्राणायामः। कुंभकपूरकरेचकप्रकारकः। स शनैः शनैर्जेतव्यो वनगजेन्द्रवत्।। समाधिप्रत्यनीकार्थेभ्यः समंताच्चेतसो व्यावर्त्तनं प्रत्याहारः।। चित्तस्य देशबंधो धारणा।। तत्र प्रत्ययैकतानता ध्यानम्।। तदेवार्थमात्रनिर्भासं स्वह्वपशून्यमिव समाधिः। ध्यानोत्कर्षान्निवाताचल-प्रदीपावस्थानमिवैकत्रैव चेतसावस्थानं समाधिरभिधीयते।। एवमेतानि योगांगानि मुमुक्षुणा सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकार-दुःखभावनयाऽनभिरतिसंज्ञितं परं वैराग्यं महेश्वरे च परां भक्तिमाश्रित्यात्यंताभियोगेन सेवितव्यानि।। ततोऽचिरेणैव कालेन भगवंतमनुपमस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति। तं दृष्ट्वा निरतिशयं श्रेयः प्राप्नोति। तथा चोक्तम्।

**यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।**

**तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति।।**

तमेव विदित्वाऽतिमृत्युमेति।।

नान्यः पंथा विद्यतेऽयनाय।। तस्माच्छिवदर्शनादेव मोक्ष इति।। कः पुनरयं मोक्षः। एके तावद्वर्णयन्ति समस्तविशेषगुणोच्छेदे संहारावस्थायामाकाशवदात्मनोऽत्यंतावस्थानं मोक्षः।। कस्मात्। सुखदुःख-योरविनाभावित्वेन विवेकहानानुपपत्तिः। कंटकादिजनितदुःखपरिहारार्थत्वेनाऽपि प्रवृत्तेरुपलंभादिति। मोहावस्थात्वान्मूर्च्छाद्यवस्थावदत्र विवेकिनां प्रवृत्तिर्न युक्तेत्याहुरन्ये। दुःखे सति सुखोपभोगस्याऽसंभवात्कंटकादिपरिहारोऽपि सुखोपभोगार्थमेवेत्यसमो दृष्टान्तः।।

कुतो मुक्तस्य सुखोपसिद्धिरिति चेदागमात्।

उक्तं हि।।

**सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम्।**

**तं वै मोक्षं विजानीयाद्दुष्प्रापमकृतात्मनि।।**

तथा-

**आनंदं ब्रह्मणोह्वपं तच्च मोक्षेऽभिव्यज्यते।**

**विज्ञानमानंदं ब्रह्मेति च।।**

मुख्यार्थे बाधकाभावान्नोपचारकल्पना।। सुखसंवेदनयोर्नित्यत्वान्मुक्त-संसारबद्धयोरविशेषप्रसंग इति चेन्न। चक्षुर्घटयोः कुड्यादेरिव सुखसंवेदनयोर्विषयविषयिभावसंबंधप्रत्यनीकस्य दुःखादेः संसारावस्थायां सद्भावात्। तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः संबंध इत्यतो नाविशेषः।।

तस्य संबंधस्य कृतकत्वेन क्वचिन्नाशप्रसंग इति चेन्न प्रध्वंसेनानैकान्तिकत्वात्।।

वस्तुत्वे सतीति चेन्न द्रव्यादिष्वनन्तर्भावेन तदसिद्धत्वादन्तर्भावे वा समवायादिभिः सह तत्संवेदनस्य संबंधो न स्यात्।।

अदृष्टादिवशात्कर्मकारणं विषयतज्जनितं ज्ञानं विषयीति चेन्न। ईश्वरज्ञानस्य नित्यस्यार्थैः सह संबंधाभावप्रसंगात्। तस्मात्कृतकत्वेऽपि नित्यसुखसंवेदनसंबंधस्य विनाशकारणाभावान्नित्यत्वं स्थितम्।। तत्सिद्धमेतन्नित्यसंवेद्यमानेन सुखेन विशिष्टाऽऽत्यंतिकी दुःखनिवृत्तिः पुरुषस्य मोक्षः।।

इति परमाचार्यतार्किकसार्वभौमश्रीभासर्वज्ञप्रणीते न्यायसारप्रकरणे तृतीय आगमपरिच्छेदः समाप्तः।।

**समाप्तं चेदं न्यायसाराख्यं प्रकरणम्।।**



# पूर्वमीमांसादर्शनम्

**लौगाक्षिभास्करविरचितः**

## अर्थसङ्ग्रहः

### उपोद्घातविभागः

**वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः।**
**कुरुते जैमिनिनये प्रवेशायार्थसंग्रहम्।।१।।**

(१) अथ परमकारुणिको भगवाञ्जैमिनिर्धर्मविवेकाय द्वादशलक्षणीं प्रणिनाय। तत्रादौ धर्मजिज्ञासां सूत्रयामास- 'अथातो धर्मजिज्ञासे' ति। (जै०सू० १/१/१) अत्राथशब्दो वेदाध्ययनानन्तर्यवचनः। अतःशब्दो हि वेदाध्ययनस्य दृष्टार्थत्वं ब्रूते।

'स्वाध्यायोऽव्येतव्य' इत्यध्ययनविधौ तदध्ययनस्यार्थज्ञानरूपदृष्टार्थकत्वेन व्यवस्थापनात्। तथा च वेदाध्ययनान्तरं यतोऽर्थज्ञानरूपदृष्टार्थकं तदध्ययनमतो हेतोर्धर्मस्य वेदार्थस्य जिज्ञासा कर्तव्येति शेषः। जिज्ञासापदस्य विचारे लक्षणा। अतो धर्मविचारशास्त्रमिदमारम्भणीयमिति शास्त्रारम्भसूत्रार्थः।

(२) अथ को धर्मः, किं तस्य लक्षणमिति चेत्। उच्यते- यागादिरेव धर्मः। तल्लक्षणं वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म इति। प्रयोजनेऽतिव्याप्तिवारणाय प्रयोजनवदिति। भोजनादावतिव्याप्तिवारणाय वेदप्रतिपाद्य इति। अनर्थफलकत्वादनर्थभूते श्येनादावतिव्याप्तिवारणायार्थ इति।

(३) न च 'चोदनालक्षणोऽर्थो धर्म' (जै०सू० १/१/२) इति सौत्रतल्लक्षणविरोधः, चोदनापदस्य विधिरूपवेदैकदेशपरत्वादिति वाच्यम्। तत्रापि चोदनाशब्दस्य वेदमात्रपरत्वात्। वेदस्य सर्वस्य धर्मतात्पर्यवत्त्वेन धर्मप्रतिपादकत्वात्।

(४) स च यागादिः 'यजेत स्वर्गकाम' इत्यादिवाक्येन स्वर्गमुद्दिश्य पुरुषं प्रति विधीयते। तथा हि- यजेतेत्यत्रास्त्यंशद्वयं यजिधातुः प्रत्ययश्च।

प्रत्ययेऽप्यस्त्यंशद्वयमाख्यातत्वं लिङ्त्वं च। तत्राख्यातत्वं दशलकारसाधारणं लिङ्त्वं पुनर्लिङ्मात्रे। उभाभ्यामप्यंशाभ्या भावनैवोच्यते।

## भावनाविचारः

(५) भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः। सा च द्विधा- शाब्दीभावना आर्थीभावना चेति।

## शाब्दीभावना

(६) तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दीभावना। सा च लिङंशेनोच्यते। लिङ्श्रवणेऽयं मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीतेः। यद्यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यम्। यथा गामानयेत्यस्मिन्वाक्ये गोशब्दस्य गोत्वम्।

स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः। वैदिकवाक्ये तु पुरुषाभावाल्लिङादिशब्दनिष्ठ एव। अत एव शाब्दीभावनेति व्यवह्रियते।

(७) सा च भवना अंशत्रयमपेक्षते-साध्यं साधनमितिकर्तव्यतां च, किं भावयेत्, केन भावयेत्, कथं भावयेदिति।

तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थीभावना साध्यत्वेनान्वेति एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः। संख्यादीनामेकप्रत्ययगम्यत्वेऽप्ययोग्यत्वान्न साध्यत्वेनान्वयः।

साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेनान्वेति। तस्य च करणत्वं न भावनोत्पादकत्वेन, तत्पूर्वमपि तस्याः शब्दे सत्त्वात्। किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्तकत्वेन वा।

इतिकर्तव्यताकाङ्क्षायामर्थवादज्ञाप्यप्राशस्त्यमितिकर्तव्यतात्वेनान्वेति।

## आर्थीभावनालक्षणम्

(८) प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थीभावना, सा चाख्यातत्वांशेनोच्यते, आख्यातसामान्यस्य व्यापारवाचित्वात्।

## आर्थीभावनाया अंशत्रयम्

(९) साप्यंशत्रयमपेक्षते-सांध्यं साधनमितिकर्तव्यतां च, किं भावयेत्, केन भावयेत्, कथं भावयेदिति। तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति।

साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति। इतिकर्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेति।

(१०) अथ को वेद इति चेत्। उच्यते-अपौरुषेयं वाक्यं वेदः। स च विधि-मन्त्र-नामधेय-निषेधार्थवादभेदात् पञ्चविधः।

## विधिविभागः

(११) तत्राज्ञातार्थज्ञापको वेदभागो विधिः। स च तादृशप्रयोजनवदर्थविधानेनार्थवान् यादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते-यथा 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इति विधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते, अग्निहोत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः।

(१२) यत्र कर्म मानान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते-यथा 'दध्ना जुहोती' त्यत्र होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानं, 'दध्ना होमं भावयेदि' ति। यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते-यथा 'सोमेन यजेते' त्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्टयागविधानम्। सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति वाक्यार्थबोधः।

न चोभयविधाने वाक्यभेदः, प्रत्येकमुभयस्याविधानात्, किन्तु विशिष्टस्यैकस्यैव विधानात्।

(१३) न च 'ज्योतिष्टोमेन स्वर्गकामो यजेते' ति विधिः प्राप्तयागोद्देशेन सोमह्वपगुणविधानमेवास्तु, सोमेन यागं भावयेदिति किं मत्वर्थलक्षणयेति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वासंभवात्।

ननु 'उद्भिदा यजेत पशुकाम' इत्यस्येव ज्योतिष्टोमेनेत्यस्याप्युत्पत्त्यधिकारविधित्वमस्त्विति चेत्, न। दृष्टान्ते उत्पत्तिवाक्यान्तराभावेनान्यथानुपपत्त्या तथात्वाश्रयणात्। किञ्च ज्योतिष्टोमेनेत्यस्योभयविधित्वेऽनेनैव यागस्तस्य फलसंबन्धोऽपि बोधनीय इति सुदृढो वाक्यभेदः। तद्वरं सोमपदे मत्वर्थलक्षणया विशिष्टविधानम्।

## विधिश्चतुर्विधः

(१४) विधिश्चतुर्विधः- उत्पत्तिविधिः, विनियोगविधिः, अधिकारिविघिः, प्रयोगविधिश्चेति।

## उत्पत्तिविधिः

(१५) तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः, यथा 'अग्निहोत्रं' जुहोति। अत्र च विधौ कर्मण:करणत्वेनान्वयः, अग्निहोत्रहोमेनेष्टं भावयेदिति।

ननु यागस्य द्वे रूपे द्रव्यं देवता च। तथा च रूपाश्रवणेऽग्निहोत्रं जुहोतीति कथमुत्पत्तिविधिः? अग्निहोत्रशब्दस्य तु तत्प्रख्यन्यायेन नामधेयत्वादिति चेत्। न। रूपाश्रवणेऽप्यस्योत्पत्तिविधित्वात्। अन्यथा रूपश्रवणात् 'दध्ना जुहोती'-त्ययमेवोत्पत्तिविधिः स्यात्। तथा च 'अग्निहोत्रं जुहोती' ति वाक्यमनर्थकं स्यात्।

## विनियोगविधिः

(१६) अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिः। यथा 'दध्ना जुहोती' ति। स हि तृतीयया प्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते दध्ना होमं भावयेदिति।

गुणविधौ च धात्वर्थस्य साध्यत्वेनान्वयः, क्वचिदाश्रयत्वेनापि यथा 'दध्नेन्द्रियकामस्य जुहुया' दिति। अत्र दधिकरणत्वेनेन्द्रियं भावयेत्। तच्च किन्निष्ठमित्याकाङ्क्षायां संनिधिप्राप्तहोम आश्रयत्वेनान्वेति।

## विधेःश्रुत्यादिषट्प्रमाणानि

(१७) एतस्य विधेः सहकारिभूतानि षट्प्रमाणानि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि। एतत्सहकृतेनानेन विधिनाङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते।

(१८) तत्र निरपेक्षो रवः श्रुतिः। सा च त्रिविधा-विधात्री, अभिधात्री, विनियोक्त्री च। तत्राद्या लिङाद्यात्मिका। द्वितीया व्रीह्यादिश्रुतिः। यस्य च शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा विनियोक्त्री।

## विनियोक्त्री श्रुतिस्त्रिधा

(१९) सापि त्रिविधा-विभक्तिरूपा, एकाभिधानरूपा, एकपदरूपा चेति। तत्र विभक्तिश्रुत्या अङ्गत्वं यथा 'व्रीहिभिर्यजेते' ति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम्। तदपि पुरोडाशप्रकृतितया। यथा पशोर्हृदयादिरूपहविः प्रकृतितया यागाङ्गत्वम्।

अथ महावाक्यार्थो वर्ण्यते । इदं तत्त्वमसीतिवाक्यं सम्बन्धत्रयेणाखण्डार्थबोधकं भवति । सम्बन्धत्रयं नाम पदयोः सामानाधिकरण्यं, पदार्थयोर्विशेषणविशेष्यभावः, प्रत्यगात्मलक्षणयोर्लक्ष्यलक्षणभावश्चेति । तदुक्तम् –

**सामानाधिकरण्यं च विशेषणविशेष्यता ।**

**लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम् ।।** इति ।

सामानाधिकरण्यसम्बन्धस्तावद्यथा 'सोऽयं देवदत्तः' इत्यस्मिन्वाक्ये तत्कालविशिष्ट-देवदत्तवाचकसशब्दस्यैतत्कालविशिष्टदेवदत्तवाचक- अयंशब्दस्य चैकस्मिन् पिण्डे तात्पर्यसम्बन्धः । तथा च तत्त्वमसीतिवाक्येऽपि परोक्षत्वादिविशिष्टचैतन्यवाचकतत्-पदस्य अपरोक्षत्वादिविशिष्टचैतन्यवाचकत्वम्पदस्य चैकस्मिन्चैतन्ये तात्पर्यसम्बन्धः । विशेषणविशेष्यभावसम्बन्धस्तु यथा तत्रैव वाक्ये सशब्दार्थतत्कालविशिष्टदेवदत्तस्य अयं शब्दार्थ एतत्कालविशिष्टदेवदत्तस्य चान्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावः । तथात्रापि वाक्ये तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वम्पदार्थ अपरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्तकतया विशेषणविशेष्य-भावः । लक्ष्यलक्षणसम्बन्धस्तु यथा तत्रैव वाक्ये सशब्दायंशब्दयोस्तदर्थयोर्वा विरुद्धतत्कालैतत्कालविशिष्टत्वपरित्यागेन अविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभावः । तथात्रापि वाक्ये तत्त्वम्पदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्व-परित्यागेनाविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः । इयमेव भागलक्षणेत्युच्यते।। २७।।

## ( विशेषणविशेष्यभावनिरूपणम् )

अस्मिन्वाक्ये नीलमुत्पलमिति वाक्यवद्वाक्यार्थो न सङ्गच्छते । तत्र तु नीलपदार्थ-नीलगुणस्य उत्पलपदार्थोत्पलद्रव्यस्य च शौक्ल्यपटादिभेदव्यावर्तकतयान्योन्य-विशेषणविशेष्यभावसंसर्गस्यान्तरविशिष्टस्यान्यतरस्य तदैक्यस्य वा वाक्यार्थत्वाङ्गीकारे प्रमाणान्तरविरोधाभावात्तद्वाक्यार्थः सङ्गच्छते । अत्र तु तदर्थपरोक्षत्वादिविशिष्ट-चैतन्यस्य त्वमर्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेद-व्यावर्तकतया विशेषणविशेष्यभावसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य च वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधाद्वाक्यार्थो न सङ्गच्छते । तदुक्तम् –

**संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः ।**

**अखण्डैकरसत्वेन वाक्यार्थो विदुषां मत इति ।।२८।।**

## ( जहल्लक्षणानिरूपणम् )

अत्र गङ्गायां घोषः प्रतिवसतीतिवाक्यवज्जहल्लक्षणापि न सङ्गच्छते । तत्र तु गंगाघोषयोराधारधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वाद्वाक्यार्थमशेषतः परित्यज्य तत्सम्बन्धितीरलक्षणाया युक्तत्वाज्जहल्लक्षणा संगच्छते । अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधाद्भागान्तरमपि परित्यज्यान्यलक्षणाया अयुक्तत्वाज्जहल्लक्षणा न च संगच्छते । न गंगापदं स्वार्थपरित्यागेन तीरपदार्थं यथा लक्षयति तथा तत्पदं त्वम्पदं वा स्वार्थपरित्यागेन त्वम्पदार्थं तत्पदार्थं वा लक्षयत्वतः कुतो जहल्लक्षणा न संगच्छत इति वाच्यम् । तत्र तीरपदाश्रवणेन तदर्थाप्रतीतौ लक्षणया तत्प्रतीत्यपेक्षायामपि तत्त्वम्पदयोः श्रूयमाणत्वेन तदर्थप्रतीतौ लक्षणया पुनरन्यतरपदेनान्यतर-पदार्थप्रतीत्यपेक्षाभावात्।। २९ ।।

## ( अजहल्लक्षणानिरूपणम् )

अत्र शोणो धावति इति वाक्यवद् अजल्लक्षणापि न सम्भवति । तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसम्भवादजहल्लक्षणा सम्भवति। अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्ट-चैतन्यैकत्वस्य वाक्यार्थस्य विरूद्धत्वात्तदपरित्यागेन तत्सम्बन्धिनो यस्य कस्यचिदर्थलक्षणस्य लक्षितत्वेऽपि तद्विरोधपरिहारासम्भवादजल्लक्षणा न सम्भवत्येव। न च तत्पदं त्वम्पदं वा स्वार्थविरुद्धांशपरित्यागेनांशान्तरसहितं त्वम्पदार्थं तत्पदार्थं वा लक्षयत्वतः कथं प्रकारान्तरेण भागलक्षणांगीकरणमिति वाच्यम् । एकेन पदेन स्वार्थांशपदार्थान्तरोभय लक्षणाया असम्भवात्पदान्तरेण तदर्थप्रतीतौ लक्षणया पुनस्तत्प्रतीत्यपेक्षाभावाच्च ।। ३० ।।

## ( जहदजहल्लक्षणानिरूपणम् )

तस्माद्यथा सोऽयं देवदत्त इति वाक्यं तदर्थो वा तत्कालैतत्कालविशिष्टदेवदत्त-लक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्धतत्कालैतत्कालविशिष्टत्वांशं परित्यज्याविरुद्धं देवदत्तांशमात्रं लक्षयति तथा तत्त्वमसीतिवाक्यं तदर्थो वा परोक्षत्वा-परोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्ध परोक्षत्वा-परोक्षत्वादिविशिष्टत्वांशं परित्यज्याविरुद्धमखण्डचैतन्यमात्रं लक्षयतीति।। ३१।।

## ( अनुभववाक्यार्थः )

अथाधुनाहं ब्रह्मास्मीत्यनुभववाक्यार्थो वर्ण्यते । एवमाचार्येणाध्यारोपापवादपुरस्सरं तत्त्वम्पदार्थौ शोधयित्वा वाक्येनाखण्डार्थेऽवबोधितेऽधिकारिणोऽहं नित्यशुद्धबुद्धमुक्त-सत्यस्वभावपरमानन्दानन्ताद्वयं ब्रह्मास्मीत्यखण्डाकाराकारिता चित्तवृत्तिरुदेति । सा तु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते । तदा पटकारणतन्तुदाहे पटदाहवदखिलकारणेऽज्ञाने बाधिते सति तत्कार्यस्याखिलस्य बाधितत्वादन्तर्भूताखण्डाकाराकारिताचित्तवृत्तिरपि बाधिता भवति। तत्र प्रतिबिम्बितं चैतन्यमपि यथा दीपप्रभादित्यप्रभावभासनासमर्था सती तयाभिभूता भवति तथा स्वयम्प्रकाशमानप्रत्यगभिन्नपरब्रह्मावभासनानर्हतया तेनाभिभूतं सत्स्वोपाधिभूताखण्डचित्तवृत्तेर्बाधितत्वाद्दर्पणाभावे मुखप्रतिबिम्बस्य मुखमात्रत्ववत् प्रत्यगभिन्नपरब्रह्ममात्रं भवति ॥ ३२ ॥

### ( वृत्तिव्याप्यत्वस्वीकारेण श्रुत्योरविरोधनिरूपणम् )

एवं च सति ''मनसैवानुद्रष्टव्यं'' ''यन्मनसा न मनुत'' इत्यनयोः श्रुत्योरविरोधो वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् तदुक्तम् –

**फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ।**

**ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता इति ।।**

**स्वयम्प्रकाशमानत्वान्नाभास उपयुज्यते इति च ।।**

जडपदार्थाकाराकारितचित्तवृत्तेर्विशेषोऽस्ति । तथा हि- अयं घट इति घटाकाराकारित-चित्तवृत्तिरज्ञातं घटं विषयीकृत्य तद् गताज्ञाननिरसनपुरस्सरं स्वगतचिदाभासेन जडं घटमपि भासयति । तदुक्तम् –

**बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम् ।**

**तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्।।** इति ॥

यथा दीपप्रभामण्डलमन्धकारगतं घटपटादिकं विषयीकृत्य तद्गतान्धकार-निरसनपुरस्सरं स्वप्रभया तदपि भासयतीति ॥ ३३ ॥

### ( साक्षात्कारोपयोगिनां श्रवणादीनां निरूपणम् )

एवम्भूतस्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवणमनननिदिध्यासनसमाधि-अनुष्ठानस्य अपेक्षितत्वात्तेऽपि प्रदर्श्यन्ते । श्रवणं नाम षड्विधलिङ्गैरशेषवेदान्तानाद्वितीये

वस्तूनि तात्पर्यावधारणम् । लिङ्गानि तूपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्या –

ख्यानि । तत्र प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहारौ । यथा छान्दोग्ये षष्ठाध्याये प्रकरणप्रतिपाद्यस्य अद्वितीयवस्तुनः "एकमेवाद्वितीयम्" इत्यादौ "ऐतदात्म्यमिदं सर्वम्" इत्यन्ते च प्रतिपादनम् । प्रकरणप्रतिपाद्यस्य वस्तुनस्तन्मध्ये पौनः पुन्येन प्रतिपादनमभ्यासः । यथा तत्रैवाद्वितीयवस्तुनि मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनम् । प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तराविषयीकरणम् अपूर्वता । यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम् । फलं तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनम् । यथा तत्र "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति अद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं श्रूयते । प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः । यथा तत्रैव "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति अमतं मतम् अविज्ञातं विज्ञातम्" इति अद्वितीयवस्तुप्रशंसनम् । प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः । यथा तत्र "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् " इत्यादौ अद्वितीय वस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयते । मननं तु श्रुतस्य अद्वितीय- वस्तुनो वेदान्तानुगुणयुक्तिभिः अनवरतम् अनुचिन्तनम् । विजातीयदेहादिप्रत्ययरहित-अद्वितीयवस्तुसजातीयप्रत्ययप्रवाहो निदिध्यासनम् । समाधिर्द्विविधः सविकल्पको निर्विकल्पकश्चेति । तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयानपेक्षया अद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम् । तदा मृण्मयगजादिभानेऽपि मृद्भानवद् द्वैतभानेऽप्यद्वैतं वस्तु भासते । तदुक्तम् –

**दृशिस्वरूपं गगनोपमं परं, सकृद्विभातं त्वजमेकमक्षरम् ।**

**अलेपकं सर्वगतं यदद्वयं, तदेव चाहं सततं विमुक्तमोम्।।** इति ।।

निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पलयापेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाः चित्वृत्तेरतितरामेकीभावेनावस्थानम् । तदा तु जलाकाराकारितलवणानवभासेन जलमात्राभासवद् अद्वितीयवस्त्वाकाराकारितचित्तवृत्यनवभासेन अद्वितीयवस्तुमात्र-मवभासते । ततश्चास्य सुषुप्तेश्चाभेदशंका न भवति। उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भाव असद्भावमात्रेण अनयोर्भेदोपत्तेः ।। ३४ ।।

## ( समाधिसाधनानां निरूपणम् )

अस्याङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः। तत्र ''अहिंसासत्यास्तेयब्रह्मचर्यपरिग्रहा यमाः''। ''शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः''। ''करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीन्यासनानि । ''रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः''। ''इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः''। ''अद्वितीयवस्तुन्यन्तरिन्द्रिधारणं धारणा''। ''तत्राद्वितीयवस्तुनि विच्छिद्य-विच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहो ध्यानम् ''। समाधिस्तूक्तः सविकल्पक एव ।। ३५ ।।

## ( विघ्नचतुष्टयनिरूपणम् )

एवमस्याङ्गिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारो विघ्नाः सम्भवन्ति । लयस्तावदखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा । अखण्डवस्तु अनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं विक्षेपः । लयविक्षेपाभावेऽपि चित्तवृत्तेः रागादिवासनया स्तब्धीभावादखण्डवस्तु अनवलम्बनं कषायः । अखण्डवस्तु अनवलम्बनेनापि चित्तवृत्तेः सविकल्पकानन्दास्वादनं रसास्वादः । समाध्यारम्भसमये सविकल्पकानन्दास्वादनं वा ।। ३६ ।।

## ( निर्विकल्पकसमाध्यवस्थानिरूपणम् )

अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वातदीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते यदा तदा निर्विकल्पकः समाधिरित्युच्यते । तदुक्तम् –

**लये सम्बोधयेच्चित्तं विक्षप्तं शमयेत्पुनः ।**
**सकषायं विजानीयाच्छमप्राप्तं न चालयेत् ।।**

**न स्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत्।** इति ।
**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।।** इति च ।। ३७ ।।

## ( जीवन्मुक्तलक्षणम् )

अथ जीवन्मुक्तलक्षणमुच्यते । जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तद् ज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृतेऽज्ञानतत्कार्यसञ्चितकर्मसंशय-विपर्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठः ।

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।** इत्यादिश्रुतेः।। ३८।।

**( जीवन्मुक्तस्य कर्मफलबन्धो नास्तीतिनिरूपणम् )**

अयं तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादिभाजनेन शरीरेणान्ध्यमान्द्यपटुत्वादिभाजनेनेन्द्रियग्रामेणाशनायापिपासाशोकमोहादिकभाजनेनान्तःकरणेन च पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धारब्धफलानि च पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यति । यथेन्द्रजालमिति ज्ञानवांस्तदिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति । ''स चक्षुरचक्षुरिव सकर्णोऽकर्ण इव'' इत्यादिश्रुतेः । उक्तं च -

**सुषुप्तवज्जाग्रति यो न पश्यति द्वयं च पश्यन्नपि चाद्वयत्वतः।**
**तथा च कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः।।**
**इति।।३९।।**

**( जीवन्मुक्तस्य शुभकर्माचरणमेवेति निरूपणम् )**

अस्य अज्ञानात्पूर्वं विद्यमानानामेवाहारविहारादीनामनुवृत्तिवच्छुभवासनानामेवानुवृत्तिः भवति शुभाशुभयोरौदासीन्यं वा । तदुक्तम् –

**बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।**
**शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ।।** इति ।।
**ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः ।।** इति ।। ४० ।।

**( अमानित्वादिगुणानामलङ्कारत्वनिरूपणम् )**

तदानीममानित्वादीनि ज्ञानसाधनान्यद्वेष्टृत्वादयः सद्गुणाश्चालंकारवदनुवर्त्तन्ते । तदुक्तम्-

**उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्यादयो गुणाः ।**
**अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ।।** इति ।। ४१ ।।

**( उपसंहारः )**

किं बहुनायं देहयात्रामात्रार्थमिच्छानिच्छापरेच्छाप्रापितानि सुखदुःखलक्षणान्यारब्धफलानि अनुभवन्नन्तःकरणाभासादीनामवभासकः संस्तदवसाने प्रत्यगानन्दपरब्रह्मणि प्राणेलीने सत्यज्ञानतत्कार्यसंस्काराणामपि विनाशात्परमकैवल्यम् आनन्दैकरसमखिल-

भेदप्रतिभासरहितमखण्डब्रह्मावतिष्ठते । ''न तस्य प्राणा उत्क्रामन्ति'' ''अत्रैव समवलीयन्ते'' ''विमुक्तश्च विमुच्यत'' इत्यादिश्रुतेः ॥ ४२ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यसदानन्दविरचितो वेदान्तसारः समाप्तः**



# काश्मीरशैवदर्शनम्

### राजानकश्रीक्षेमेन्द्रविरचितम्

## प्रत्यभिज्ञाहृदयम्

**नमः शिवाय सततं पञ्चकृत्यविधायिने ।**
**चिरानन्दघनस्वात्मपरमार्थावभासिने ।।१।।**

**शाङ्करोपनिषत्सारप्रत्यभिज्ञामहोदधेः।**
**क्षेमेणोद्ध्रियते सारः संसारविषशान्तये ।।२।।**

इह ये सुकुमारमतयोऽकृततीक्ष्णतर्कशास्त्रपरिश्रमाः शक्तिपातोन्मि-

षितपारमेश्वरसमावेशाभिलाषिणः कतिचित् भक्तिभाजः, तेषाम् ईश्वर-प्रत्यभिज्ञोपदेशतत्त्वं मनाक् उन्मील्यते ।

तत्र स्वात्मदेवताया एव सर्वत्र कारणत्वं सुखोपायप्राप्यत्वं महाफलत्वं च अभिव्यङ्क्तुमाह -

**चितिः स्वतन्त्रा विश्वसिद्धिहेतुः ।।१।।**

'विश्वस्य-'सदाशिवादेः भूम्यन्तस्य 'सिद्धौ' निष्पत्तौ, प्रकाशने स्थित्यात्मनि, परप्रमातृविश्रान्त्यात्मनि च संहारे, पराशक्तिरूपा 'चितिः' भगवती 'स्वतन्त्रा'-अनुत्तर-विमर्शमयी शिवभट्टारकाभिन्ना 'हेतुः-' कारणम्।

अस्यां हि प्रसरन्त्यां जगत् उन्मिषति व्यवतिष्ठते च, निवृत्तप्रसरायां च निमिषति; - इति स्वानुभव एव अत्र साक्षी । अन्यस्य तु मायाप्रकृत्यादेः चित्प्रकाशभिन्नस्य अप्रकाशमानत्वेन असत्त्वात् न क्वचिदपि हेतुत्वम्: प्रकाशमानत्वे तु प्रकाशैकात्म्यात् प्रकाशरूपा चितिरेव हेतुः, न त्वसौ कश्चित् । अत एव देशकालाकारा एतत्सृष्टा एतदनुप्राणिताश्च नैतत्स्वरूपं भेत्तुमलम्; इति व्यापक-नित्योदित-परिपूर्णरूपा इयम् इत्यर्थलभ्यमेव एतत् ।

ननु जगदपि चितो भिन्नं नैव किञ्चित्; अभेदे च कथं हेतुहेतुः-मद्भावः? उच्यते । चिदेव भगवती स्वच्छस्वतन्त्ररूपा तत्तदनन्तजगदात्मना

स्फुरति, इत्येतावत्परमार्थोऽयं कार्यकारणभावः । यतश्च इयमेव प्रमातृप्रमाणप्रमेयमयस्य विश्वस्य सिद्धौप्रकाशने हेतुः, ततोऽस्याः स्वतन्त्रापरिच्छिन्नस्वप्रकाशरूपायाः सिद्धौ-अभिनवार्थप्रकाशनरूपं न प्रमाणवराकमुपयुक्तम् उपपन्नं वा । तदुक्तं त्रिकसारे -

**स्वपदा स्वशिरश्छायां यद्वल्लङ्घितुमीहते ।**
**पादोद्देशे शिरो न स्यात्तथेयं वैन्दवी कला ।। इति ।**

यतश्च इयं विश्वस्य सिद्धौ पराद्वयसामरस्यापादनात्मनि च संहारे हेतुः' तत एव स्वतन्त्रा । प्रत्यभिज्ञातस्वातन्त्र्या सती, भोगमोक्षस्वरूपाणां विश्वसिद्धीनां हेतुः-इति आवृत्त्या व्याख्येयम् ।

अपि च 'विश्वं-' नील-सुख-देह-प्राणादि; तस्य या 'सिद्धिः' प्रमाणोपारोहक्रमेण विमर्शमयप्रमात्रावेशः, सैव 'हेतुः'-परिज्ञाने उपायो यस्याः । अनेन च सुखोपायत्वमुक्तम् । यदुक्तं श्रीविज्ञानभट्टारके ।

**'ग्राह्यग्राहकसंवित्तिः सामान्या सर्वेदेहिनाम् ।**
**योगिनां तु विशेषोऽयं सम्बन्धे सावधानता ।।' इति।**

'चितिः'-इति एकवचनं देशकालाद्यनवच्छिन्नताम् अभिदधत् समस्तभेदवादानाम् अवास्तवतां व्यनक्ति ।

'स्वतन्त्र-'शब्दो ब्रह्मवादवैलक्षण्यम् आचक्षाणःचितो माहेश्वर्यसारतां ब्रूते । 'विश्व-इत्यादिपदम् अशेषशक्तित्वं, सर्वकारणत्वं, सुखोपायत्वं महाफलं च आह ।।१।।

ननु विश्वस्य यदि चितिः हेतुः, तत् अस्या उपादानाद्यपेक्षायां भेदवादापरित्यागः स्यात्-इत्याशङ्क्य आह।

## स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति ।।२।।

'स्वेच्छया,' न तु ब्रह्मादिवदन्येच्छया, तथैव च, न तु उपादानाद्य- पेक्षया,- एवं हि प्रागुक्तस्वातन्त्र्यहान्या चित्त्वमेव न घटेत-'स्वभित्तौ,'न तु अन्यत्र क्वापि,प्राक् निर्णीतं 'विश्वं दर्पणे नगरवत् अभिन्नमपि भिन्नमिव 'उन्मीलयति'। उन्मीलनं च अवस्थितस्यैव प्रकटीकरणम् । इत्यनेन जगतः प्रकाशैकात्म्येन

अवस्थानम् उक्तम् ॥२॥

अथ विश्वस्य स्वरूपं विभागेन प्रतिपादयितुमाह -

## तन्नाना अनुरूपग्राह्यग्राहकभेदात् ।।३।।

'तत' विश्वं 'नाना'-अनेकप्रकारम् । कथम् ? 'अनुरूपाणां'-परस्परौचित्यावस्थितीनां 'ग्राह्याणां ग्राहकाणां' च 'भेदात्'-वैचित्र्यात् । तथा च सदाशिवतत्त्वे अहन्ताच्छादित-अस्फुटेदन्तामयं यादृशं परापररूपं विश्वं ग्राह्यं तादृगेव श्रीसदाशिवभट्टारकाधिष्ठितो मन्त्रमहेश्वराख्यः प्रमातृवर्गः परमेश्वरेच्छावकल्पिततथावस्थानः। ईश्वरतत्त्वे स्फुटेदन्ताहन्तासामानाधिकरण्यात्म यादृक् विश्वं ग्राह्यं,तथाविध एव ईश्वरभट्टारकाधिष्ठितो-मन्त्रेश्वरवर्गः। विद्यापदे श्रीमदनन्त-भट्टारकाधिष्ठिता बहुशाखा-वान्तरभेदभिन्ना यथाभूता मन्त्राः प्रमातारः तथाभूतमेव भेदैकसारं विश्वमपि प्रमेयम् ।

मायोर्ध्वे यादृशा विज्ञानाकलाः कर्तृताशून्यशुद्धबोधात्मानः, तादृगेव तदभेदसारं सकलप्रलयाकलात्मकपूर्वावस्थापरिचितम् एषां प्रमेयम् ।

मायायां शून्यप्रमातृणां प्रलयकेवलिनां स्वोचितं प्रलीनकल्पं प्रमेयम्। क्षितिपर्यन्तावस्थितानां तु सकलानां सर्वतो भिन्नानां परिमितानां तथाभूतमेव प्रमेयम् । तदुत्तीर्णशिवभट्टारकस्य प्रकाशैकवपुषः प्रकाशैकरूपा एव भावाः। श्रीमत्परमशिवस्य पुनः विश्वोत्तीर्ण-विश्वात्मक-परमानन्दमयप्रकाशैकघनस्य एवंविधमेव शिवादि-धरण्यन्तम् अखिलं अभेदेनैव स्फुरति; न तु वस्तुतः अन्यत् किञ्चित् ग्राह्यं ग्राहकं वा; अपि तु श्रीपरमशिवभट्टारक एव इत्थं नानावैचित्र्यसहस्रैः स्फुरति-इत्यभिहितप्रायम् ॥३॥

## चितिसङ्कोचात्मा चेतनोऽपि सङ्कुचितविश्वमयः ।।४।।

श्रीपरमशिवः स्वात्मैक्येन स्थितं विश्वं सदाशिवाद्युचितेन रूपेण अवविभासयिषुः पूर्वं चिदैक्याख्यातिमयानाश्रित-शिवपर्यायशून्या तिशून्यात्मतया प्रकाशाभेदेन प्रकाशमानतया स्फुरति; ततः चिद्रसाश्यानतारूपाशेषतत्त्वभुवनभाव तत्प्रमात्राद्यात्मतयापि प्रथते । यथा च एवं भगवान् विश्वशरीरः, तथा 'चितिसङ्कोचात्मा' सङ्कुचित चिद्रूपः, 'चेतनो' ग्राहकोऽपि वटधानिकावत्

सङ्कुचिताशेषविश्वरूप:। तथा च सिद्धान्तवचनम् ।

'विग्रहो विग्रही चैव सर्वविग्रहविग्रही ।' इति । त्रिशिरोमतेऽपि ।

**'सर्व देवमयः कायस्तं चेदानीं शृणु प्रिये ।**
**पृथिवी कठिनत्वेन द्रवत्वेऽम्भः प्रकीर्तितम् ।।**

इत्युपक्रम्य ।

**त्रिशिरो भैरवः साक्षाद्व्याप्य विश्वं व्यवस्थितः।।**

इत्यन्तेन ग्रन्थेन ग्राहकस्य सङ्कुचितविश्वमयत्वमेव व्याहरति।

अयं च अत्राशय:-ग्राहकोऽपि अयं प्रकाशैकात्म्येन उक्तागमयुक्त्या च विश्वशरीरशिवैकरूप एव, केवलं तन्मायाशक्त्या अनभिव्यक्तस्वरुपत्वात् सङ्कुचित इव आभाति; सङ्कोचोऽपि विचार्यमाण: चिदैकात्म्येन

प्रथमानत्वात् चिन्मय एव, अन्यथा तु न किञ्चित् । इति सर्वो ग्राहको विश्वशरीर: शिवभट्टारक एव । तदुक्तं मयैव

**'आख्यातिर्यदि न ख्याति ख्यातिरेवावशिष्यते ।**
**ख्याति चेत्ख्यातिरूपत्वात् ख्यातिरेवावशिष्यते ।।'** इति ।

अनेनैव आशयेन श्रीस्पन्दशास्त्रेषु, **'यस्मात्सर्वमयो जीवः.......।'** इत्युपक्रम्य।

**'तेन शब्दार्थचिन्तासु न सावस्था न यःशिवः।'** इत्यादिना शिवजीवयोरभेद एव उक्त:। एततत्त्वपरिज्ञानमेव मुक्ति:, एतत्तत्त्वापरिज्ञानमेव च बन्ध:; इति भविष्यति एव एतत् ।।४।।

## चितिरेव चेतनपदादवरूढा चेत्यसङ्कोचिनी चित्तम् ।।५।।

न चित्तं नाम अन्यत्किञ्चित्, अपि तु सैव भगवती तत् । तथा हि सा स्वं स्वरुपं गेपयित्वा यदा सङ्कोचं गृह्णाति, तदा द्वयी गति: कदाचित् उल्लसितमपि सङ्कोचं गुणीकृत्य चित्प्राधान्येन स्फुरति, कदाचित् सङ्कोचप्रधानतया । चित्प्राधान्यपक्षे सहजे प्रकाशमात्रप्रधानत्वे विज्ञानाकलता; प्रकाशपरामर्शप्रधानत्वे तु विद्याप्रमातृता ।

तत्रापि क्रमेण सङ्कोचस्य तनुतायाम् , ईश-सदाशिवानाश्रितरूपता । समाधिप्रयत्नोपार्जिते तु चित्प्रधानत्वे शुद्धाध्वप्रमातृता क्रमात्क्रमं प्रकर्षवती। सङ्कोचप्राधान्ये तु शून्यादिप्रमातृता । एवमवस्थिते सति, 'चितिरेव' सङ्कुचितग्राहकरूपा 'चेतनपदात् अवरुढा' अर्थग्रहणोन्मुखी सती 'चेत्येन' नीलसुखादिना 'सङ्कोचिनी' उभय-सङ्कोचसङ्कुचितैव चित्तम् । तथा च

**स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या ।**
**मायातृतीये ते एव पशोः सत्त्वं रजस्तमः ।।**

इत्यादिना स्वातन्त्र्यात्मा चितिशक्तिरेव ज्ञान-क्रिया-मायाशक्तिरूपा पशुदशायां सङ्कोचप्रकर्षात् सत्त्वरजस्तमःस्वभावचित्तात्मतया स्फुरति; इति श्रीप्रत्यभिज्ञायामुक्तम् । अत एव श्रीतत्त्वगर्भस्तोत्रे विकल्प-दशायामपि तात्त्विकस्वरूपसद्भावात् तदनुसरणाभिप्रायेण उक्तम्-

**'अत एव तु ये केचित् परमार्थानुसारिणः ।**
**तेषां तत्र स्वरूपस्य स्वज्योतिष्ट्वं न लुप्यते ।।' इति ।।५।।**

चित्तमेव तु मायाप्रमातुः स्वरूपम् -

**इत्याह तन्मयो मायाप्रमाता ।।६।।**

देहप्राणपदं तावत् चित्तप्रधानमेव; शून्यभूमिरपि चित्तसंस्कारवत्येव; अन्यथा ततो व्युत्थितस्य स्वकर्तव्यानुधावनाभावःस्यात्;-इति चित्तमय एव मायीयः प्रमाता । अमुनैव आशयेन शिवसूत्रेषु वस्तुवृत्तानुसारेण ।

'चैतन्यमात्मा'(१-१)

इत्यभिधाय, मायाप्रमातृलक्षणावसरे पुनः'चित्तमात्मा'(३-१) इत्युक्तम् ।।६।।

अस्यैव सम्यक् स्वरुपज्ञानात् यतो मुक्तिः,असम्यक् तु संसारः,ततःतिलश एतत्स्वरुपं निर्भङ्क्तुमाह-

**स चैको द्विरूपस्त्रिमयश्चतुरात्मा सप्तपञ्चकस्वभावः ।।७।।**

निर्णीतदृशा चिदात्मा शिवभट्टारक एव 'एक' आत्मा, न तु अन्यःकश्चित्;प्रकाशस्य देशकालादिभिः भेदायोगात् जडस्य तु ग्राहकत्वानुपपत्तेः । प्रकाश एव यतः स्वातन्त्र्यात् गृहीतप्राणादिसङ्कोचः सङ्कुचितार्थग्राहकतामश्नुते, ततः असौ प्रकाशरूपत्त्वसङ्कोचावभासवत्त्वाभ्यां 'द्विरूपः।' आर्णव-मायीय-कार्ममलावृतत्वात् 'त्रिमयः' शून्य-प्राण-पुर्यष्टक शरीरस्वभावत्वात् 'चतुरात्मा'। 'सप्तपञ्चकानि'। शिवादिपृथिव्यन्तानि पञ्चत्रिंशत्तत्त्वानि 'तत्स्वभावः'। तथा शिवादि-सकलान्त-प्रमातृसप्तकस्वरूपः चिदानन्देच्छाज्ञानक्रियाशक्तिरूपत्वेऽपि अख्यातिवशात् कला-विद्या-राग-काल-नियतिकञ्चुकवलितत्वात् पञ्चकस्वरूप;। एवं च शिवैक-रूपत्वेन, पञ्चत्रिंशत्तत्त्वमयत्वेन, प्रमातृसप्तकस्वभावत्वेन च चिदादिशक्तिपञ्चकात्मकत्वेन अयं प्रत्यभिज्ञायमानो मुक्तिदः एवं च अन्यथा तु संसारहेतुः ।।७।।

## तद्भूमिकाः सर्वदर्शनस्थितयः ।।८।।

'सर्वेषां' चार्वाकादिदर्शनानां 'स्थितयः'-सिद्धान्ताः 'तस्य' एतस्य आत्मनो नटस्येव स्वेच्छावग्रहीताः कृत्रिमा 'भूमिकाः' । तथा च । **'चैतन्यविशिष्टं शरीरमात्मा।'** इति चार्वाकाः नैयायिकादयो ज्ञानादिगुणगणाश्रयं बुद्धितत्त्वप्रायमेव आत्मानं संसृतौ मन्यन्ते, अपवर्गे तु तदुच्छेदे शून्यप्रायम्।

अहं-प्रतीतिप्रत्येयः सुखदुःखाद्युपाधिभिः तिरस्कृतः आत्मा-इति मन्वाना मीमांसका अपि बुद्धावेव निविष्टाः ।

ज्ञानसन्तान एव तत्त्वम्-इति सौगता बुद्धिवृत्तिषु एव पर्यवसिताः। प्राण एव आत्मा इति केचित् श्रुत्यन्तविदः। असदेव इदमासीत्-इत्यभावब्रह्मवादिनः शून्यभुवमवगाह्य स्थिताः ।

माध्यमिका अपि एवमेव । परा प्रकृतिः भगवान् वासुदेवः तद्विस्फुलिङ्गप्राया एव जीवाः-इति पाञ्चरात्राः परस्याः प्रकृतेः परिणामाभ्युपगमात् अव्यक्ते एव अभिनिविष्टाः ।

साङ्ख्यादयस्तु विज्ञानाकलप्रायां भूमिम् अवलम्बन्ते । सदेव इदमग्र आसीत्-इति ईश्वरतत्त्वपदमाश्रिता अपरे श्रुत्यन्तविदः ।

शब्दब्रह्ममयं पश्यन्तीरूपम् आत्मतत्त्वम्-इति वैयाकरणाः श्रीसदाशिवपदमध्यासिताः । एवमन्यदपि अनुमन्तव्यम् । एतच्च आगमेषु।

**'बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वेवार्हताः स्थिताः ।**
**स्थिता वेदविदः पुंसि अव्यक्ते पाञ्चरात्रिकाः ।।'**

इत्यादिना निरूपितम् ।

विश्वोत्तीर्णमात्मतत्त्वम्-इति तान्त्रिकाः । विश्वमयम्-इति कुलाद्याम्नायनिविष्टाः ।

विश्वोत्तीर्णं विश्वमयं च-इति त्रिकादिदर्शनविदः । एवं एकस्यैव चिदात्मनो भगवतः स्वातन्त्र्यावभासिताःसर्वा इमा भूमिकाः स्वातन्त्र्यप्रच्छादनोन्मीलनतारम्यभेदिताः। अत एक एव एतावद्व्याप्तिक आत्मा । मितदृष्टयस्तु अंशांशिकासु तदिच्छयैव अभिमानं ग्राहिताः, येन देहादिषु भूमिषु पूर्वपूर्वप्रमातृव्याप्तिसारताप्रथायामपि उक्तरूपां महाव्याप्तिं परशक्तिपातं विना न लभन्ते । यथोक्तम् ।

**'वैष्णवाद्यास्तु ये केचिद्विद्यारागेण रञ्जिताः ।**
**न विदन्ति परं देव सर्वज्ञं ज्ञानशालिनम् ।।'** इति ।

तथा **'भ्रमयत्येव तान्माया ह्यमोक्षेमोक्षलिप्सया।'** इति । **'त आत्मोपासकाः शैवं न गच्छन्ति परं पदम् ।'** इति च

अपि च **'सर्वेषां दर्शनानां'** - समस्तानां नीलसुखादिज्ञानानां याः 'स्थितयः' अन्तर्मुखरूपा विश्रान्तयः ताः 'तद्भूमिकाः' चिदानन्दाघनस्वात्मस्वरूपाभिव्यक्त्युपायाः । तथा हि यदा यदा बहीर्मुखरूपं स्वरुपे विश्राम्यति, तदा तदा बाह्यवस्तूपसंहारः, अन्तःप्रशान्तपदावस्थितिः; तत्तदुदेष्यत्संतत्यासूत्रणम्; - इति सृष्टिस्थितिसंहारमेलनरूपा इयं तुरीया संविद्भट्टारिका तत्तत्सृष्ट्यादिभेदान् उद्वमन्ती संहरन्ती च, सदा पूर्णा च, कृशा च, उभयरूपा च अनुभयात्मा च, अक्रममेव स्फुरन्ती स्थिता ।

उक्तं च श्रीप्रत्यभिज्ञाटीकायाम् । **'तावदर्थावलेहेन उत्तिष्ठति, पूर्णा च भवति ।'** इति ।

एषा च भट्टारिका क्रमात्क्रमम् अधिकमनुशील्यमाना स्वात्म-सात्करोत्येव भक्तजनम् ।।८।।

यदि एवंभूतस्य आत्मनो विभूतिः, तत् कथमयं मलावृतःअणुः कलादिवलितः संसारी अभिधीयते? इत्याह-

**चिद्वत्तच्छक्तिसङ्कोचात् मलावृतः संसारी ।।९।।**

यदा 'चिदात्म'परमेश्वरः स्वस्वातन्त्र्यात् अभेदव्याप्तिं निमज्ज्य भेदव्याप्तिम् अवलम्बते, तदा 'तदीया इच्छादिशक्तयः' असङ्कुचिता अपि **'सङ्कोचवत्यो'** भान्ति; तदानीमेव च अयं 'मलावृतः संसारी' भवति । तथा च अप्रतिहतस्वातन्त्र्यरूपा इच्छाशक्तिःसङ्कुचिता सती अपूर्णंमन्यतारूपम् आणवं मलम्; ज्ञानशक्तिः क्रमेण सङ्कोचात् भेदे सर्वज्ञत्वस्य किञ्चिज्ज्ञत्वाप्तेः अन्तःकरण-बुद्धीन्द्रियतापत्तिपूर्वम् अत्यन्तं सङ्कोचग्रहणेन भिन्नवेद्यप्रथारूपं मायीयं मलम् ।

क्रियाशक्तिः क्रमेण भेदे सर्वकर्तृत्वाप्तेः कर्मेन्द्रियरूपसङ्कोचग्रहणपूर्वम् अत्यंतं परिमिततां प्राप्ता शुभाशुभानुष्ठानमयं कार्मं मलम् । तथा सर्वकर्तृत्व-सर्वज्ञत्व-पूर्णत्व-नित्यत्व-व्यापकत्वशक्तयः सङ्कोचं गृह्णाना यथाक्रमं कला-विद्या-राग-काल-नियमितरूपतया भान्ति । तथाविधश्च अयं शक्तिदरिद्रः संसारी उच्यते; स्वशक्तिविकासे तु शिव एव ।।

ननु संसार्यवस्थायाम् अस्य किञ्चित् शिवतोचितम् अभिज्ञानमस्ति येन शिव एव तथावस्थितः?-इत्युद्घोष्यते। 'अस्ति' -इत्याह-

**तथापि तद्वत् पञ्चकृत्यानि करोति ।।१०।।**

इह ईश्वराद्वयदर्शनस्य ब्रह्मवादिभ्यः अयमेव विशेषः, यत्

**सृष्टिसंहारकर्तारं विलयस्थितिकारकम् ।**
**अनुग्रहकरं देवं प्रणतार्तिविनाशनम् ।।**

इति श्रीमत्स्वच्छन्दादिशासनोक्तनीत्या सदा पञ्चविधकृत्यकारित्वं चिदात्मनो भगवतः । यथा च भगवान् शुद्धेतराध्वस्फारणक्रमेण स्वरूपविकासरूपाणि सृष्ट्यादीनि करोति 'तथा' सङ्कुचितचिच्छक्तितया संसारभूमिकायामपि 'पञ्चकृत्यानि'

विधत्ते ।

तथा हि

**'तदेवं व्यवहारेऽपि प्रभुर्देहादिमाविशन् ।**
**भान्तमेवान्तरर्थौघमिच्छया भासयेद्बहिः ।।'**

इति प्रत्यभिज्ञाकारिकोक्तार्थदृष्ट्या देहप्राणादिपदम् आविशन् चिद्रूपो महेश्वरो बहिर्मुखीभावावसरे नीलादिकमर्थं नियतदेशकालादितया यदा आभासयति, तदा नियतदेशकालाद्याभासांशे अस्य स्रष्टृता; अन्यदेशकालाद्याभासांशे अस्य संहर्तृता; नीलाद्याभासांशे स्थापकता; भेदेन आभासांशे विलयकारिता; प्रकाशैक्येन प्रकाशने अनुग्रहीतृता । यथा च सदा पञ्चविधंकृत्यकारित्वं भगवतः, तथा मया वितत्य स्पन्दसन्दोहे निर्णीतम्।

एवमिदं पञ्चविधकृत्यकारित्वम् आत्मीयं सदा दृढप्रतिपत्त्या परिशील्यमान माहेश्वर्यम् उन्मीलयत्येव भक्तिभाजाम् ।अत एव ये सदा एतत्परिशीलयन्ति, ते स्वरूपविकासमयं विश्वं जानाना जीवन्मुक्ता-इत्याम्नाताः। ये तु न तथा, ते सर्वतो विभिन्नं मेयजातं पश्यन्तो बद्धात्मानः।।१०।।

न च अयमेव प्रकारः पञ्चविधकृत्यकारित्वे, यावत् अन्योऽपि कश्चित् रहस्यरूपोऽस्ति।- इत्याह

**आभासनरक्तिविमर्शन-बीजावस्थापन-विलापनतस्तानि ।।११।।**

पञ्चविधकृत्यानि करोति' इति पूर्वतः सम्बध्यते । श्रीमन्महार्थ दृष्टया दृगादिदेवीप्रसरणक्रमेण यत् यत् आभाति, तत् तत् सृज्यते; तथा सृष्टे पदे तत्र यदा प्रशान्तनिमेषं कञ्चित् कालं रज्यति, तदा स्थितिदेव्या तत् स्थाप्यते; चमत्कारापरपर्यायविमर्शनसमये संह्रियते । यथोक्तं श्रीरामेण।

**'समाधिवज्रेणाप्यन्यैरभेद्यो भेदभूधरः**
**परामृष्टश्च नष्टश्च त्वद्भक्तिबलशालिभिः ।। इति ।**

यदा तु संह्रियमाणमपि एतत् अन्तः विचित्राशङ्कादिसंस्कारम् आधत्ते, तदा तत् पुनः उद्भविष्यत्संसारबीजभावमापन्नं विलयपदम् अध्यारोपितम्।

यदा पुनः तत् तथा अन्तः स्थापितम् अन्यत् वा अनुभूयमानमेव हठपाकक्रमेण अलंग्रासयुक्त्या चिदग्निसाद्भावम् आपद्यते, तदा पूर्णतापादनेन अनुगृह्यते एव । ईदृशं च पञ्चविधकृत्यकारित्वं सर्वस्य सदा सन्निहितमपि सद्गुरूपदेशं विना न प्रकाशते, इति सद्गुरूसपर्यैव एतत्प्रथार्थम् अनुसर्तव्या ॥११॥

यस्य पुनः सद्गुरूपदेशं विना एतत्परिज्ञानं नास्ति, तस्य अवच्छादितस्वरूपाभिः निजाभिः शक्तिभिः व्यामोहितत्वं भवति । इत्याह-

**तदपरिज्ञाने स्वशक्तिभिर्व्यामोहितता संसारित्वम् ।।१२।।**

तस्य एतस्य सदा सम्भवतः पञ्चविधकृत्यकारित्वस्य 'अपरिज्ञाने' शक्तिपातहेतुकस्वबलोन्मीलनाभावात् अप्रकाशने 'स्वाभिः शक्तिभिः व्यामोहितत्वं' विविधलौकिकशास्त्रीयशङ्काशंकुकीलितत्वं यत्, इदमेव संसारित्वम् ।

तदुक्तं श्रीसर्ववीरभट्टारके ।

**'अज्ञानाच्छङ्कते लोकस्ततः सृष्टिश्च संहृतिः ।।' इति ।**
**'मन्त्रा वर्णात्मकाः सर्वे सर्वे वर्णाः शिवात्मकाः ।।'** इति च ।

तथा हि चित्प्रकाशात् अव्यतिरिक्ता नित्योदितमहामन्त्ररूपा पूर्णाहं विमर्शमयी या इयं परा वाक्शक्तिः आदिक्षान्तरूपाशेषशक्तिचक्रगर्भिणी, सा तावत् पश्यन्तीमध्यमादिक्रमेण ग्राहकभूमिकां भासयति ।

तत्र च परारूपत्वेन स्वरूपम् अप्रथयन्ती मायाप्रमातुः अस्फुटासाधारणार्थावभासरूपां प्रतिक्षणं नवनवां विकल्पक्रियामुल्लासयति, शुद्धामपि च अविकल्पभूमिं तदाच्छादितामेव दर्शयति । तत्र च ब्राह्म्यादिदेवताधिष्टितककारादिविचित्रशक्तिभिः व्यामोहितो देहप्राणादिमेव परिमितं अवशम् आत्मानं मन्यते मूढजनः । ब्राह्म्यादिदेव्यः पशुदशायां भेदविषये सृष्टिस्थिती, अभेदविषये च संहारं प्रथयन्त्यः, परिमितविकल्पपात्रतामेव सम्पादयन्ति, पतिदशायां तु भेदे संहारम्, अभेदे च सर्गस्थिती प्रकटयन्त्यः, क्रमात्क्रमं विकल्पनिर्ह्रसनेन श्रीमद्भैरव-मुद्रानुप्रवेशमयीं महतीम् अविकल्पभूमिमेव उन्मीलयन्ति ।

**सर्वो ममायं विभव इत्येवं परिजानतः।**
**विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता।।**

इत्यादिरूपां चिदानन्दावेशमग्नां शुद्धविकल्पशक्तिम् उल्लासयन्ति । ततः उक्तनीत्या स्वशक्तिव्यामोहिततैव संसारित्वम् । किञ्च चितिशक्तिरेव भगवती विश्ववमनात् संसारवामाचारत्वाच्च वामेश्वर्याख्या सती,

खेचरी-गोचरी-दिक्चरी-भूचरीरुपैः अशेषैः प्रमातृ अन्तःकरण-बहिष्करण-भावस्वभावैः परिस्फुरन्ती, पशुभूमिकायां शून्यपदविश्रान्ता किञ्चित्कर्तृत्वाद्यात्मक-कलादिशक्त्यात्मना खेचरीचक्रेण, गोपितपारमार्थिकचिद्र्गगनचरीत्वस्वरुपेण चकास्ति; भेदनिश्चयाभिमान-विकल्पनप्रधानान्तःकरणदेवीरूपेण गोचरीचक्रेण गोपिताभेदनिश्चयाद्यात्मक-पारमार्थिकस्वरुपेण प्रकाशते ।

भेदालोचनादिप्रधानबहिष्करणदेवतात्मना च दिक्चरीचक्रेण गोपिताभेदप्रथात्मकपारमार्थिकस्वरूपेण स्फुरति; सर्वतो व्यवच्छिन्ना-भासस्वभावप्रमेयात्मना च भूचरीचक्रेण गोपितसार्वात्म्यस्वरूपेण पशुहृदयव्यामोहिता भाति। पतिभूमिकायां तु सर्वकर्तृत्वादिशक्त्यात्मक-चिद्र्गगनचरीत्वेन, अभेदनिश्चयाद्यात्मना गोचरीत्वेन, अभेदालोचनाद्यात्मना दिक्चरीत्वेन, स्वाङ्गकल्पाद्वयप्रथासारप्रमेयात्मना च भूचरीत्वेन पतिहृदयविकासिना स्फुरति । तथा च उक्तं सहजचमत्कारपरिजनिताकृतादरेण भट्टदामोदरेण विमुक्तकेषु -

**पूर्णाविच्छिन्नमात्रान्तर्बहिष्करणभावगाः ।**
**वामेशाद्याः परिज्ञानाज्ञानात्स्युर्मुक्तिबन्धदाः।।** इति
एवं च निजशक्तिव्यामोहिततैव संसारित्वम् ।

अपि च चिदात्मनः परमेश्वरस्य स्वा अनपायिनी एकैव स्फुरत्तासारकर्तृतात्मा ऐश्वर्यशक्तिः । सा यदा स्वरूपं गोपयित्वा पाशवे पदे प्राणापान-समानशक्तिदशाभिः जाग्रत् - स्वप्न - सुषुप्तभूमिभिः देह-प्राण-पुर्यष्ट-ककलाभिश्च व्यामोहयति; तदा तद्व्यामोहितता संसारित्वम्; यदा तु मध्यधामोल्लासाम् उदानशक्तिं, विश्वव्याप्तिसारां च व्यानशक्तिं, तुर्यदशारूपां तुर्यातीतदशारूपां च चिदानन्दघनाम् उन्मीलयति,तदा देहाद्यवस्थायामपि पतिदशात्मा जीवन्मुक्तिर्भवति। एवं त्रिधा स्वशक्ति व्यामोहितता व्याख्याता।

‘चिद्वत्’ इति (९) सूत्रे चित्प्रकाशो गृहीतसङ्कोचः संसारी इत्युक्तम् , इह तु स्वशक्तिव्यामोहितत्वेन अस्य संसारित्वं भवति- इति भङ्ग्यन्तरेण उक्तम् । एवं सङ्कुचितशक्तिः प्राणादिमानपि यदा स्वशक्तिव्यामोहितो न भवति तदा अयम् -

**............... शरीरी परमेश्वरः ।’**

इत्याम्नायस्थित्या शिवभट्टारक एव-इति भङ्ग्या निरूपितं भवति। यदागमः -

**‘मनुष्यदेहमास्थाय छन्नास्ते परमेश्वराः।’**
इति। उक्तं च प्रत्यभिज्ञाटीकायाम् -

**‘शरीरमेव घटाद्यपि वा ये षट्त्रिंशत्तत्वमयं।**
**शिवरूपतां पश्यन्ति तेऽपि सिध्यन्ति।’** इति ॥१२॥

उक्तसूत्रार्थप्रातिपक्ष्येण तत्वदृष्टिं दर्शयितुमाह -

**तत्परिज्ञाने चित्तमेव अन्तर्मुखीभावेन चेतनपदाध्योरोहात् चितिः ॥१३॥**

पूर्वसूत्रव्याख्याप्रसङ्गेन प्रमेयदृष्टया वितत्य व्याख्यातप्रायमेतत् सूत्रम्; शब्दसङ्गत्या तु अधुना व्याख्यायते। ‘तस्य’ आत्मीयस्य पञ्चकृत्यकारित्वस्य ‘परिज्ञाने’ सति अपरिज्ञानलक्षणकारणापगमात् स्वशक्तिव्यामोहिततानिवृत्तौ स्वातन्त्र्यालाभात् प्राक् व्याख्यातं यत् ‘चित्तं’ तदेव सङ्कोचिनीं बहिर्मुखतां जहत् अन्तर्मुखीभावेन चेतनपदाध्यारोहात् - ग्राहकभूमिकाक्रमणक्रमेण सङ्कोचकलाया अपि विगलनेन स्वरूपापत्त्या ‘चितिर्’ भवति; स्वां चिन्मयीं परांभूमिमाविशति इत्यर्थः ॥१३॥३

ननु यदि पारमार्थिकं चिच्छक्तिपदं सकलभेदकवलनस्वभावं, तत्

अस्य मायापदेऽपि तथारूपेण भवितव्यं यथा जलदाच्छादितस्यापि भानोः भावावभासकत्वम् । इत्याशङ्क्याह -



**चितिवह्निरवरोहपदे छन्नोऽपि मात्रया मेयेन्धनं प्लुष्यति ॥१४॥**

'चितिरेव' विश्वग्रसनशीलत्वात् 'वह्निः' असौ एव 'अवरोहपदे-माया' प्रमातृतायां 'छन्नोऽपि' - स्वातन्त्र्यात् आच्छादितस्वभावोऽपि, भूरिभूतिच्छन्नाग्निवत् 'मात्रया' - अंशेन, नीलपीतादिप्रमेयेन्धनं 'प्लुष्यति' - स्वात्मसात् करोति। मात्रापदस्य इदम् आकूतम् - यत् कवलयन् अपि सार्वात्म्येन न ग्रसते, अपि तु अंशेन संस्कारात्मना उत्थापयति। ग्रासकत्वं च सर्वप्रमातृणां स्वानुभवत एव सिद्धम् । यदुक्तं श्रीमदुत्पलदेवपादैः निजस्तोत्रेषु।

**'वर्तन्ते जन्तवोऽशेषा अपि ब्रह्मेन्द्रविष्णवः ।**
**ग्रसमानास्ततो वन्दे देव विश्वं भवन्मयम् ।।'** इति ॥१४॥

यदा पुनः करणेश्वरीप्रसरसङ्कोचं सम्पाद्य सर्गसंहारक्रमपरिशीलनयुक्तिम् आविशति तदा

**बललाभे विश्वमात्मसात्करोति ।।१५।।**

चितिरेव देहप्राणाद्याच्छादननिमज्जनेन स्वरुपम् उन्मग्नत्वेन स्फारयन्ती बलम्; यथोक्तं-

**'तदाक्रम्य बलं मन्त्राः........... ।'** इति।

एवं च 'बललाभे' उन्मग्नस्वरुपाश्रयणे, क्षित्यादि-सदाशिवान्तं 'विश्वम् आत्मसात् करोति' स्वस्वरुपाभेदेन निर्भासयति । तदुक्तं पूर्वगुरुभिः स्वभाषामयेषु क्रमसूत्रेषु

**यथा वह्निरुद्बोधितो दाह्यं दहति तथा विषयपाशान् भक्षयेत् ।** इति ।

**'न चैवं वक्तव्यम् ,- विश्वात्मसात्काररूपा समावेशभूः कादाचित्की। कथम् उपादेया इयं स्यात् इति; यतो देहाद्युन्मज्जननिमज्जनवशेन इदम् अस्याः कादाचित्कत्वम् इव आभाति । वस्तुतस्तु चितिस्वातन्त्र्यावभासितदेहाद्युन्मज्जनात् एव कादाचित्कत्वम् । एषा तु सदैव प्रकाशमाना; अन्यथा तत् देहादि अपि न प्रकाशेत । अत एव दहादिप्रमातृताभिमाननिमज्जनाय अभ्यासः, न तु सदा प्रथमानतासारप्रमातृताप्राप्त्यर्थम् ।'** इति श्रीप्रत्यभिज्ञाकाराः ॥१५॥

एवं च

**चिदानन्दलाभे देहादिषु चेत्यमानेष्वपि चिदैकात्म्यप्रतिपत्तिदार्ढ्यं जीवन्मुक्तिः ।।१६।।**

विश्वात्मसात्कारात्मनि समावेशरुपे 'चिदानन्दे लब्धे'व्युत्थानदशायां दलकल्पतया देहप्राणनीलसुखादिषु आभासमानेषु, अपि, यत्समावेशसंस्कारबलात् प्रतिपादयिष्यमाणयुक्तिक्रमोपबृंहितात् 'चिदैकात्म्यप्रतिपत्तिदार्ढ्यम्-अविचला चिदेकत्वप्रथा, सैव जीवनन्मुक्ति जीवतः प्राणानपि धारयतो मुक्तिः; प्रत्यभिज्ञातनिजस्वरूपविद्राविता- शेषपाशराशित्वात् । यथोक्तं स्पन्दशास्त्रे-

**'इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत् ।**
**स पश्यन् सततं युक्तो जीवन्मुक्तो न संशयः'।।** इति ॥१६॥

अथ कथं चिदानन्दलाभो भवति?-इत्याह

**मध्यविकासाच्चिदानन्दलाभः ।।१७।।**

सर्वान्तरतमत्वेन वर्तमानत्वात् तद्भित्तिलग्नतां विना च कस्यचिदपि स्वरूपानुपपत्तेः संविदेव भगवती 'मध्यम्'। सा तु मायादशायां तथा भूतापि स्वरूपं गूहयित्वा **'प्राक् संवित्प्राणे परिणता ।'** इति नीत्या प्राणशक्तिभूमिं स्वीकृत्य, अवरोहक्रमेण बुद्धिदेहादिभुवम् अधिशयाना, नाडीसहस्त्रसरणिम् अनुसृता । तत्रापि पलाशपर्णमध्यशाखान्यायेन आब्रह्मरन्ध्रात् अधोवक्त्रपर्यन्तं प्राणशक्तिब्रह्माश्रयमध्यमनाडीरूपतया प्राधान्येन स्थिता; तत एव सर्ववृत्तीनाम् उदयात् , तत्रैव च विश्रामात् ।'

एवंभूतापि एषां पशूनां निमीलितस्वरूपैव स्थिता। यदा तु उक्तयुक्तिक्रमेण सर्वान्तरतमत्वे मध्यभूता संविद्भगवती विकसति, यदि वा वक्ष्यमाणक्रमेण मध्यभूता ब्रह्मनाडी विकसति तदा 'तद्विकासात् चिदानन्दस्य' उक्तरूपस्य 'लाभः' प्राप्तिर्भवति। ततश्च प्रागुक्ता जीवन्मुक्तिः ॥१७॥

मध्यविकासे युक्तिमाह



**विकल्पक्षय-शक्तिसङ्कोचविकास-**

**वाहच्छेदाद्यन्तकोटिनिभालनादय इहोपायाः ।।१८।।**

'इह' मध्यशक्तिविकासे 'विकल्पक्षयादय उपायाः'। प्रागुपदिष्टपञ्चविधकृत्यकारित्वाद्यनुसरणेन सर्वमध्यभूतायाः संविदो विकासो जायते इति अभिहितप्रायम् ।

उपायान्तरम् अपि तु उच्यते;-प्राणायाम-मुद्राबन्धादिसमस्तयन्त्रणातन्त्रत्रोटनेन सुखोपायमेव, हृदये निहितचित्तः, उक्तयुक्त्या स्वस्थितिप्रतिबन्धकं विकल्पम् अकिञ्चिच्चिन्तकत्वेन प्रशमयन्, अविकल्पपरामर्शेन देहाद्यकलुषस्वचित्प्रमातृतानिभालनप्रवणः, अचिरादेव उन्मिषद्विकासां तुर्यतुर्यातीतसमावेशदशाम् आसादयति । यथोक्तम्-

**'विकल्पहानेनैकाग्र्यात्क्रमेणेश्वरतापदम्।'** इति श्रीप्रत्यभिज्ञायाम्।

श्रीस्पन्देऽपि

'यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ।' इति । श्रीज्ञानगर्भेऽपि

**'विहाय सकलाः क्रिया जननि मानसीः सर्वतो।**
**विमुक्तकरणक्रियानुसृति पारतन्त्र्योज्ज्वलम् ।**

**स्थितैस्त्वदनुभावतः सपदि वेद्यते सा परा।**
**दशा नृभिरतन्द्रितासमसुखामृतस्यन्दिनी ।।'**

इति । अयं च उपायो मूर्धन्यत्वात् प्रत्यभिज्ञायां प्रतिपादितत्वात् आदौ उक्तः। शक्तिसङ्कोचादयस्तु यद्यपि प्रत्यभिज्ञायां न प्रतिपादिताः; तथापि आम्नायिकत्वात् अस्माभिः प्रसङ्गात् प्रदर्श्यन्ते; बहुषु हि प्रदर्शितेषु कश्चित् केनचित् प्रवेक्ष्यति इति ।

'शक्तेः सङ्कोच'-इन्द्रियद्वारेण प्रसरन्त्या एव आकुञ्चनक्रमेण उन्मुखीकरणम् । यथोक्तम् आथर्वणिकोपनिषत्सु कठवल्ल्यां चतुर्थवल्लीप्रथममन्त्रे

**'पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्।**

**कश्चिद्धीरः प्रत्यगात्मानमैक्षद् आवृत्तचक्षुरमृतत्वमश्नन् ।।'**

इति । प्रसृताया अपि वा कूर्माङ्गसङ्कोचवत् त्राससमये हृत्प्रवेशवच्च सर्वतो निवर्तनम् । यथोक्तम्

**'तदपोद्धृते नित्योदितस्थितिः ।' इति । 'शक्तेर्विकासः'** अन्तर्निगूढाया अक्रममेव सकलकरणचक्रविस्फारणेन- **'अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जितः ।'** इति । भैरवीयमुद्रानुप्रवेशयुक्त्या बहिः प्रसरणम् । यथोक्तं कक्ष्यास्तोत्रे ।

**'सर्वा शक्तीश्चेतसा दर्शनाद्याः, स्वे स्वे वेद्ये यौगपद्येन विष्वक् ।**
**क्षिप्त्वा मध्ये हाटकस्तम्भभूत, स्तिष्ठन्विश्वाधार एकोऽवभासि।।'**

इति श्रीभट्टकल्लटेनापि उक्तम्-

**'रुपादिषु परिणामात् तत्सिद्धिः ।'** इति ।

शक्तेश्च सङ्कोचविकासौ, नासापुटस्पन्दन क्रमोन्मिषत्सूक्ष्मप्राणशक्त्या भ्रूभेदनेन 'क्रमासादितोर्ध्वकुण्डलिनीपदे प्रसरविश्रान्तिदशापरिशीलनम् ; अधः कुण्डलिन्यां च षष्ठवक्त्ररूपायां प्रगुणीकृत्य शक्तिं, तन्मूल-तदग्र-तन्मध्यभूमिस्पर्शावेशः । यथोक्तं विज्ञानभट्टारके ।

**'वह्नेर्विषस्य मध्ये तु चित्तं सुखमयं क्षिपेत् ।**
**केवलं वायुपूर्णं वा स्मरानन्देन युज्यते ।।'**

इति। अत्र वह्निः अनुप्रवेशक्रमेण सङ्कोचभूः विषस्थानं प्रसरयुक्त्या विकासपदम् 'विष्लृ व्याप्तौ' इति अर्थानुगमात् ।

'वाहयोः'-वामदक्षिणगतयोः 'छेदो'-हृदयविश्रान्तिपुरःसरम् । अन्तः ककारहकारादिप्रायानच्कर्णोश्चारेण विच्छेदनम् । यथोक्तं ज्ञानगर्भे

**'अनच्ककककृतायतिप्रसृतपार्श्वनाडीद्वय, च्छिदो विधृतचेतसो हृदयपङ्कजस्योदरे। उदेति तव दारितान्धतमसः स विद्याङ्कुरो, य एष परमेशतां जनयितुं पशोरप्यलम् ।।'**

इति 'आदिकोटिः' हृदयम् , 'अन्तकोटिः' द्वादशान्तः, तयोः प्राणोल्लासविश्रान्त्यवसरे 'निभालनं' चित्तनिवेशनेन परिशीलनम् । यथोक्तं

विज्ञानभैरवे ।

**'हृद्याकाशे निलीनाक्षः पद्मसम्पुटमध्यगः ।**
**अनन्यचेताः सुभगे परं सौभाग्यमाप्नुसात् ।।'** इति यथा

**'यथा तथा यत्र तत्र द्वादशान्ते मनः क्षिपेत् ।**
**प्रतिक्षणं क्षीणवृत्तेर्वैलक्षण्यं दिनैर्भवेत् ।।'**

इति आदिपदात् उन्मेषदशानिषेवणम् ।

यथोक्तम्- **'उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ।'** इति स्पन्दे । तथा रमणीयविषयचर्वणादयश्च सङ्गृहीताः । यथोक्तं श्रीविज्ञानभैरवे एव

**'जग्धिपानकृतोल्लासरसानन्दविजृम्भणात् ।**
**भावयेद्भरितावस्थां महानन्दमयो भवेत् ।।**
**गीतादिविषयास्वादासमसौख्यैकतात्मनः ।**
**योगिनस्तन्मयत्वेन मनोरुढेस्तदात्मता ।।**
**यत्र तत्र मनस्तुष्टिर्मनस्तत्रैव धारयेत् ।**
**तत्र तत्र परानन्दस्वरूपं सम्प्रकाशते ।।'** इति ।

एवमन्यदपि आनन्दपूर्णस्वात्मभावनादिकम् अनुमन्तव्यम् ।
इत्येवमादयः अत्र मध्यविकासे उपायाः ।।१८।।

मध्यविकासाच्चिदानन्दलाभः, स एव च परमयोगिनः समावेद्य-समापत्त्यादिपर्यायः समाधिः, तस्य नित्योदितत्वे युक्तिमाह

**समाधिसंस्कारवति व्युत्थाने भूयो भूयश्चिदैक्यामर्शान्नित्योदितसमाधिलाभः ।।१९।।**

आसादितसमावेशो योगीवरो व्युत्थाने अपि समाधिरससंस्कारेण क्षीब इव सानन्दं घूर्णमानो, भावराशिं शरदभ्रलवम् इव चिद्गगन एव लीयमानं पश्यन् , भूयो भूयः अन्तर्मुखताम् एवं समवलम्बमानो, निमीलनसमाधिक्रमेण चिदैक्यमेव विमृशन् , व्युत्थानाभिमतावसरे अपि समाध्येकरस एव भवति । यथोक्तं क्रमसूत्रेषु **'क्रममुद्रया अन्तःस्वरूपया बहिर्मुखः समाविष्टो। भवति**

**साधकः । तत्रादौ बाह्यात् अन्तःप्रवेशः, आभ्यन्तरात् बाह्यस्वरूपे प्रवेशःआवेशवशात् जायते; - इति सबाह्याभ्यन्तरोऽयं मुद्राक्रमः।'** इति । अत्रायमर्थःसृष्टिस्थिति-संहृति-संविच्चक्रात्मकं क्रमं मुद्रयति, स्वाधिष्ठितम् आत्मसात् करोति येयं तुरीया चितिशक्तिः, तया 'क्रममुद्रया;' 'अन्तरिति'-पूर्णाहन्तास्वरूपया; 'बहिर्मुख' - इति, विषयेषु व्याप्पृतः अपि; 'समाविष्टः'-साक्षात्कृतपरशक्तिस्फारः 'साधकः'- परमयोगी भवति । तत्र च 'बाह्याद्' ग्रस्यमानात् विषयग्रामात् 'अन्तः'-परस्यां चितिभूमौ, ग्रसनक्रमेणैव 'प्रवेशः'-समावेशो भवति । 'आभ्यन्तरात्' चितिशक्तिस्वरूपात् च साक्षात्कृतात् 'आवेशवशात्'-समावेशसामर्थ्यात् एव 'बाह्यस्वरूपे'-इदन्तानिर्भासे विषयग्रामे, वमनयुक्त्या 'प्रवेशः'-चिद्रसाश्यानताप्रथनात्मा समावेशो जायते। इति 'सबाह्याभ्यन्तरः अयं' नित्योदितसमावेशात्मा, 'मुदो' हर्षस्य वितरणात् परमानन्दस्वरूपत्वात् , पाशद्रावणात्, विश्वस्य अन्तः तुरीयसत्तायां मुद्रणात् च मुद्रात्मा, क्रमः अपि सृष्ट्यादिक्रमाभासकत्वात् तत्क्रमाभासरूपत्वात् च 'क्रम' इति अभिधीयते इति ।।१९।।

इदानीम् अस्य समाधिलाभस्य फलमाह-

**तदा प्रकाशानन्दसारमहामन्त्रवीर्यात्मकपूर्णाहन्तावेशात् सदा सर्वसर्गसंहारकारिनिजसंविद्देवताचक्रेश्वरताप्राप्तिर्भवतीति शिवम् ।।**

नित्योदिते समाधौ लब्धे सति, 'प्रकाशानन्दसारा'-चिदाह्लादैकघना 'महती मन्त्रवीर्यात्मिका'-सर्वमन्त्रजीवितभूता 'पूर्णा' पराभट्टारिकारूपा या इयम् 'अहन्ता-अकृत्रिमः स्वात्मचमत्कारः, तत्र 'आवेशात' सदा कालाग्न्यादेः चरमकलापर्यन्तस्य विश्वस्य यौ 'सर्गसंहारौ' विचित्रौ सृष्टिप्रलयौ-'तत्कारि' यत् 'निजं संविद्देवताचक्रं' 'तदैश्वर्यस्य' 'प्राप्तिः'-आसादनं 'भवति', प्राकरणिकस्य परमयोगिन इत्यर्थः; 'इति' एतत् सर्वं शिवस्वरूपमेव इति उपसंहारः-इति सङ्गतिः । तत्र यावत् इदं किञ्चित् संवेद्यते, तस्य संवेदनमेव स्वरुपं; तस्यापि अन्तर्मुखविमर्शमयाः प्रमातारः तत्त्वम् ; तेषामपि विगलितदेहाद्युपाधिसङ्कोचाभिमाना अशेषशरीरा सदाशिवेश्वरतैव सारम् ; अस्या अपि प्रकाशैकसद्भावापादिताशेषविश्वचमत्कारमयः श्रीमान् महेश्वर एव परमार्थः; न हि पारमार्थिकप्रकाशावेशं विना कस्यापि प्रकाशमानता घटते-स च परमेश्वरः स्वातन्त्र्यसारत्वात् आदिक्षान्तामायी



यशब्दराशिपरामर्शमयत्वेनैव एतत्स्वीकृतसमस्तवाच्यवाचकमयाशेषजगदानन्द

सद्भावापादनात् परं परिपूर्णत्वात् सर्वाकाङ्क्षाशून्यतया आनन्दप्रसरनिर्भर; अत एव अनुत्तराकुलस्वरूपात् अकारात् आरम्भ शक्तिस्फाररूपहकलापर्यन्तं यत् विश्वं प्रसृतं, क्षकारस्य प्रसरशमनरूपत्वात्; तत् अकारहकाराभ्यामेव सम्पुटीकारयुक्त्या प्रत्याहारन्यायेन अन्तः स्वीकृतं सत् अविभागवेदनात्मकबिन्दुरूपतया स्फुरितम् अनुत्तर एव विश्राम्यति; इति शब्दराशिस्वरूप एव अयम् अकृतको विमर्शः । यथोक्तम्

**'प्रकाशस्यात्मविश्रान्तिरहम्भावो हि कीर्तितः । उक्ता च सैव विश्रान्तिः सर्वापेक्षानिरोधतः ।।**

**स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि च ।'**

इति । एषैव च अहन्ता सर्वमन्त्राणाम् उदयविश्रान्तिस्थानत्वात् एतद्बलेनैव तत्तदर्थक्रियाकारित्वात् महती वीर्यभूमिः । तदुक्तम्

**'तदाक्रम्य बलं मन्त्रा............... ।' इत्यादि .............त एते शिवधर्मिणः ।।**

इत्यन्तं श्रीस्पन्दे । शिवसूत्रेषु अपि 'महाह्रदानुसन्धानान्मन्त्र-वीर्यानुभवः,'(१।२२ सू०)

इति । तदत्र महामन्त्रवीर्यात्मिकायां पूर्णाहन्तायाम् 'आवेशो'- देहप्राणादिनिमज्जनात् तत्पदावाप्त्यवष्टम्भेन देहादीनां नीलादीनामपि तद्रसाप्लावनेन तन्मयीकरणम् । तथा हि देहसुखनीलादि यत् किञ्चित् प्रथते, अध्यवसीयते, स्मर्यते, सङ्कल्प्यते वा, तत्र सर्वत्रैव भगवति चितिशक्तिमयी प्रथा भित्तिभूतैव स्फुरति;-तदस्फुरणे कस्यापि अस्फुरणात् इति उक्तत्वात् । केवलं तथा स्फुरन्त्यपि सा, तन्मायाशक्त्या अवभासितदेहनीलाद्युपरागदत्ताभिमानवशात् भिन्नभिन्नस्वभावा इव भान्ति ज्ञानसङ्कल्पाध्यवसायादिरूपतया मायाप्रमातृभिः अभिमन्यते; वस्तुतस्तु एकैव असौ चितिशक्तिः । यथोक्तम्

**या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता । अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः ।।** इति । तथा-



**मायाशक्त्या विभोः सैव भिन्नसंवेद्यगोचरा।**

**कथिता ज्ञानसङ्कल्पाध्यवसायादिनामभिः ।।** इति ।

एवम् एषा सर्वदशासु एकैव चितिशक्तिः विजृम्भमाणा यदि तदनुप्रवेश-तदवष्टम्भयुक्त्या समासाद्यते, तत् तदावेशात्-पूर्वोक्तयुक्त्या करणोन्मीलननिमीलनक्रमेण सर्वस्य सर्वमयत्वात् तत्तत्संहारादौ अपि 'सदा सर्वसर्गसंहारकारि' यत् 'सहजसंवित्तिदेवताचक्रम्-'अमायीयान्त र्बहिष्करणमरीचिपुञ्जः, तत्र 'ईश्वरता' साम्राज्यं परभैरवात्मता, तत्प्राप्तिः भवति परमयोगिनः । यथोक्तम्-

**यदा त्वेकत्र संरूढस्तदा तस्य लयोद्भवौ ।**
**नियच्छन्भोक्तृतामेति ततश्चक्रेश्वरो भवेत् ।। इति ।**

अत्र एकत्र इति ।

'एकात्रारोपयेत् सर्वम्............... । इति । चित्सामान्यस्पन्दभूः उन्मेषात्मा व्याख्यातव्या । तस्य इति अनेन **'पुर्यष्टकेन संरुद्धः........।'** इति ।

उपक्रान्तं पुर्यष्टकम् एव परामृष्टव्यम् ; न तु यथा विवरणकृतः 'एकत्र सूक्ष्मे स्थूले शरीरे वा' इति व्याकृतवन्तः ।

स्तुतं च मया

**'स्वतन्त्रश्चितिचक्राणं चक्रवर्ती महेश्वरः । संवित्तिं देवताचक्रजुष्टः कोऽपि जयत्यसौ ।।'**

इति । इतिशब्द उपसंहारे, यत् एतावत् उक्तप्रकरणशरीरं तत् सर्वं 'शिवम् - शिवप्राप्तिहेतुत्वात् , शिवात् प्रसृतत्वात् शिवस्वरूपाभिन्नत्वाच्च शिवमयमेव इति शिवम् ।।

**देहप्राणसुखादिभिः प्रतिकलं संरुध्यमानो जनः,**
**पूर्णानन्दघनामिमां न चिनुते माहेश्वरीं स्वां चितिम् ।**

**मध्ये बोधसुधाब्धिविश्वमभितस्तत्फेनपिण्डोपमं,**
**यः पश्येदुपदेशतस्तु कथितः साक्षात्स एकः शिवः ।**

**येषां वृत्तः शाङ्करः शक्तिपातो, येऽनभ्यासात्तीक्ष्णयुक्तिष्वयोग्याः।**
**शक्ता ज्ञातुं नेश्वरप्रत्यभिज्ञा, मुक्तस्तेषामेष तत्त्वोपदेशः।।**

समाप्तमिदं प्रत्यभिजाहृदयम् ।।

कृतिस्तत्रभवन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तपादपद्मोपजीविनः

श्रीमतो राजानकक्षेमराजाचार्यस्य ।। शुभमस्तु ।।

